स्वरूपं निर्मलं शान्तं मनस्त्यजति चेत् क्षणम् ।
तदैव दृश्यसंस्कारशेषात् सङ्क्षुभ्यतीन्द्रियम् ॥ ७० ॥
उत्थितानुत्थितांस्तत्र इन्द्रियादीन् पुनः पुनः ।
विवेकेनैव वज्रेण हन्यादिन्द्रो गिरीनिव ॥ ७१ ॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे राजयोगप्रकारपरिच्छेदः ।

---

## अथ सप्तमः परिच्छेदः ।

एवमात्मानुभविनो जीवन्मुक्तस्य लक्षणम् ।
स्पष्टं वक्ष्ये भवेद् येन ज्ञानाज्ञानपरीक्षणम् ॥ १ ॥
श्रवणान्मननाद् वाऽपि अन्यथाऽऽत्मज्ञताभ्रमात् ।
कुर्याद् गुरुमविद्वांसं स्याच्चाऽज्ञो ज्ञाभिमान्यपि ॥२॥
नैश्वर्यानागतज्ञत्वादिकं ज्ञानस्य लक्षणम् ।
तद्दतेऽपि हि कैवल्यं योगभाष्यकृतेरितम् ॥ ३ ॥
श्रौतस्मार्तानि वाक्यानि ज्ञानिनो मोक्षभागिनः ।
लक्षकाण्येव लिख्यन्ते विश्वासातिशयाय वै ॥ ४ ॥
यत्र सर्वाणि भूतानि आत्मैवाऽभूद् विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ५ ॥
यः सर्वत्राऽनभिस्नेहस्तत् तत् प्राप्य शुभाशुभम् ।
नाऽभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६ ॥
न विस्मरति सर्वत्र यथा सततगो गतिम् ।
न विस्मरति निस्त्रैल्यं चिन्मात्रं प्राज्ञधीस्तथा ॥ ७ ॥
नोदेति नाऽस्तमायाति सुखे दुःखे मुखप्रभा ।
यथापूर्वस्थितिर्यस्य स जीवन्मुक्त उच्यते ॥ ८ ॥
यो जागर्त्ति सुषुप्तस्थो यस्य जाग्रन्न विद्यते ।

यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते ॥९॥
रागद्वेषभयादीनामनुरूपं चरन्नपि।
योऽन्तर्व्योमवदत्यच्छः स जीवन्मुक्त उच्यते॥ १० ॥
यस्य नाऽहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते।
कुर्वतोऽकुर्वतो वाऽपि स जीवन्मुक्त उच्यते ॥ ११ ॥
अपि शीतरुचावर्के अत्युष्णेऽपीन्दुमण्डले।
अप्यधःप्रसवत्यग्नौ जीवन्मुक्तो न चाऽन्यधीः ॥ १२ ॥
चिदात्मन इमा नित्यमस्फुरन्तीह शक्तयः।
इत्यस्याऽऽश्चर्यजालेषु नाऽभ्युदेति कुतूहलम् ॥ १३ ॥
परव्यसनिनी नारी व्यग्राऽपि गृहकर्मणि।
तदेवाऽऽस्वादयत्यन्तर्नैरसङ्गरसायनम् ॥ १४ ॥
एवं तत्त्वे परे शुद्धे धीरो विश्रान्तिमागतः।
तदेवाऽऽस्वादयत्यन्तर्बहिर्व्यवहरन्नपि ॥ १५ ॥
यो नित्यमध्यात्ममयो नित्यमन्तर्मुखः सुखी।
गम्भीरश्च प्रसन्नश्च गिराविव महाह्रदः ॥ १६ ॥
परानन्दरसाक्षुब्धो रमते स्वात्मनाऽऽत्मनि।
सर्वकर्मपरित्यागी नित्यहृष्टो निरामयः ॥ १७ ॥
न पुण्येन न पापेन नेतरेणाऽपि लिप्यते।
येन केन चिदाच्छन्नो येन केन चिदाशितः ॥ १८ ॥
यत्र क्वचन शायी च स सम्राडिव राजते।
वर्णधर्माश्रमाचारशास्त्रमन्त्रनयेषितः ॥ १९ ॥
निर्गच्छति जगज्जालात् पञ्जरादिव केशरी।
वाचामतीतविषयो विषयाशादृशेच्छितः ॥ २० ॥
कलामप्युपगतः शोभां शरदीव नभस्तलम्।

निःस्तोत्रो निर्नमस्कारः पूज्यपूजाविवर्जितः ॥ २१ ॥
संयुक्तो वा वियुक्तो वा सदाचारनयक्रमैः ।

एतावदेव खलु लिङ्गमलिङ्गमूर्त्तेः
संशान्तसंसृतिचिरभ्रमनिर्वृतस्य ।
तज्ज्ञस्य यन्मदनकोपविषादलोभ-
मोहापदामनुदिनं निपुणं तनुत्वम् ॥ २२ ॥

तुर्यविश्रान्तियुक्तस्य प्रतीपस्य भवार्णवात् ।
न कृतेनाऽकृतेनाऽर्थो न श्रुतिस्मृतिविभ्रमैः ॥ २३ ॥
तनुं त्यजतु वा तीर्थे श्वपचस्य गृहेऽथवा । पिवा पाँ
ज्ञानसम्प्राप्तिसमये मुक्त एवाऽमलाशयः ॥ २४ ॥
न मोक्षो नभसः पृष्ठे न पाताले न भूतले ।
सर्वाशासङ्क्षये चेतःक्षयो मोक्ष इति श्रुतेः ॥ २५ ॥
जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ।
विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ २६ ॥
अनामाखिलशैलादिप्रतिबिम्बे हि यादृशी ।
स्याद् दर्पणे दर्पणता केवलात्मस्वरूपिणी ॥ २७ ॥
अहं त्वं जगदित्यादौ प्रशान्ते दृश्यसंभ्रमे ।
स्यात् तादृशी केवलता स्थिते द्रष्टर्यवीक्षणे ॥ २८ ॥
चिन्मात्रं चैत्यरहितमनन्तमजरं शिवम् ।
अनादिमध्यनिलयं यदनाधि निरामयम् ॥ २९ ॥
न शून्यं नाऽपि चाऽऽकारं न दृश्यं न च दर्शनम् ।
अनाख्यमनभिव्यक्तं तत् किञ्चिदवशिष्यते ॥ ३० ॥

इति श्रीविज्ञानभिक्षुविरचिते साङ्ख्यसारे जीवन्मुक्तिपरमतुर्यः
परिच्छेदः ।

इति साङ्ख्यसारस्योत्तरभागः । साङ्ख्यसाराख्यं प्रकरणं समाप्तम् ।

बृहदारण्यक सटीक सभाष्य १०
सुश्रुत वैद्यक ४
शार्ङ्गधर (वैद्यक) १
वेतालपञ्चविंशतिः ॥।०
पातञ्जलदर्शन (सभाष्यसटीक) ४
आत्मतत्त्वविवेक (बौद्धाधिकार) २
मुक्तिकोपनिषत् /
उपमान चिन्तामणि ।०
नागानन्द नाटक १
पूर्णप्रज्ञ दर्शनम् सभाष्य २
चन्द्रशेखरचम्पूकाव्य २
सामवेदस्य मन्त्र ब्राह्मणम् (भाष्य सहितम्) २
सामवेदस्य आरण्यसंहिता सायणाचार्य कृत भाष्यसहिता १
वृषभानुजानाटिका सटीक १
कारण्डव्यूह (बौद्धशास्त्र) २
कुवलयानन्द अलङ्कारसटीक २
प्रियदर्शिका नाटिका सटीक ॥
सारस्वत व्याकरण सटीक पूर्वार्द्धम् १।
वासवदत्ता सटीक २
(कालिदास कृत पुष्पबाण-विलास काव्य सटीक ॥
महिम्न शतकम्, पदारविन्द शतकम्, स्तुतिशतकम्, मन्दस्मित शतकम्, कटाक्षशतकम्, १
० मनुसंहिता टीका सहित ५
१ नैषधचरितम् टीका सहित १०
२ चन्द्रालोक प्राचीन अलङ्कार ॥
३ वीरमित्रोदय (स्मृतिशास्त्र) १०

८४ भावप्रकाश (वैद्यक) १०
८५ प्रबोधचन्द्रोदय नाटक सटीक २
८६ अनर्घराघवनाटक (मुरारिकृत) २
८७ दैवतब्राह्मण सभाष्य १
८८ षड्विंशब्राह्मणम् सभाष्य १
८९ मीमांसा परिभाषा ॥०
९० अर्थसंग्रह (लौगाक्षीमीमांसा) ॥०
९१ रघुवंश सटीक १॥०
९२ मेघदूत सटीक ॥
९३ कथासरित्सागर (सम्पूर्ण) ६
९४ ईश्वरानुमानचिन्तामणि (गङ्गेशोपाध्याय कृत) १
९५ न्यायदर्शन सभाष्य सवृत्ति २॥
९६ सटीक वाल्मीकिरामायण बालकाण्डम् २
९७ साहित्यदर्पण टीकासहित अलङ्कार शास्त्र ४
९८ मदनपालनिघण्टुः (वैद्यक) १
९९ संस्कृतशिक्षामञ्जरीप्रथमभागः /
१०० संस्कृतशिक्षामञ्जरीद्वितीयभागः ।०
१०१ साहित्यदर्पणम् (अलङ्कार) १॥
१०२ श्रीहर्षचरित बाणभट्टकृत २
१०३ अमरकोष ॥
१०४ वेदान्तसूत्र शङ्कराचार्यकृत शारीरकभाष्य तथा गोविन्दानन्द-कृत टीका सहित १०
१०५ वेदान्तपरिभाषा १
१०६ वेदान्तसारसटीक ।
१०७ सटीक निदान (वैद्यक) .
१०८ कामन्दकी नीतिसार
१०९ सङ्क्षिप्त... सटीक १

११० अत्रि, विष्णु, हारीत याज्ञवल्क्य, उशना, अङ्गिरा, यम, आपस्तम्ब, संवर्त्त, कात्यायन, बृहस्पति पराशर, व्यास, शङ्ख, लिखित, दक्ष गौतम शातातप वशिष्ठ प्रणीत संहिता (धर्मशास्त्र) १५
१११ मत्स्यपुराण ६
११२ चरकसंहिता (वैद्यक) सम्पूर्ण १०
११३ रसेन्द्रचिन्तामणि तथा रसरत्नाकर (वैद्यक) ६
११४ भगवद्गीता शङ्करभाष्य आनन्दगिरिकृतटीका तथा सुबोधिनीसमेत ५
११५ शब्दशक्तिप्रकाशिका १
११६ मालतीमाधव सटीक १।
११७ सटीक भट्टिकाव्य ४
११८ सटीक काव्यप्रकाश ४
११९ सभाष्य शाण्डिल्यसूत्र ॥/
१२० लघुकौमुदीव्याकरणम् ॥०
१२१ महानाटकम् (हनुमन्नाटक) १
१२२ दशरूपकम् (अलङ्कार) १॥०
१२३ भोजचम्पू (भोजदेवकृत चम्पूरामायणम्) १
१२४ भारत चम्पू सटीक ४
१२५ मार्कण्डेयपुराणम् ५
१२६ गोलाध्यायः १
१२७ गणिताध्यायः १
१२८ पञ्चदशी (सटीक) २
१२९ पातञ्जलदर्शनस्य भोजवृत्तिः १
१३० शकुन्तलानाटक सटीक १
१३१ महिम्नःपारशर्यः
१३२ बृहत्संहिता वा वाराहीसंहिता
१३३ तर्कामृत (जगदीशकृत)
१३४ द्वात्रिंशत्पुत्तलिका
१३५ उत्तररामचरित सटीक
१३६ शङ्करविजय १॥
१३७ मृच्छकटिकप्रकरण सटीक
१३८ काव्यादर्शसटीक (अलङ्कार)
१३९ अष्टाङ्गहृदय संहिता (वाग्भटकृत वैद्यक)
१४० शुक्रनीति सटीक
१४१ गीतगोविन्द सटीक
१४२ अग्निपुराणम्
१४३ विष्णुपुराणम् सटीक
१४४ मीमांसादर्शन सभाष्य
१४५ अध्यात्मरामायणम् सटी...
१४६ महानिर्वाणतन्त्रम् सटीक ।
१४७ मीमांसादर्शनस्य अधिकरणमाला
१४८ श्रुतबोधः (छन्दोग्रन्थ)
१४९ बालरामायण नाटक सटी...
१५० लिङ्गपुराणम्
१५१ चण्डकौशिकनाटक सटीक ।
१५२ चैतन्यचन्द्रोदयनाटक सटीक
१५३ कलापव्याकरणम्
१५४ कुसुमाञ्जलि सटीक
१५५ संगीत पारिजात
१५६ शार्ङ्गधर

कलिकाता संस्कृतविद्यामन्दिरे बि, ए, उपाधिधारिणः श्रीजीवानन्दविद्यासागर-भट्टाचार्य्यस्य-सकाशात् लभ्यानि॥

# SANKHYA TATTWA KOUMUDI.

BY

VACHASPATI MISHRA

EDITED BY

DHARMADHIKARI DHUNDHIRAJA PANTA

SHARMANA

# ॥ साङ्ख्यतत्त्वकौमुदी ॥

निखिलतन्त्रमहामहोपाध्याय श्रीवाचस्पतिमिश्रविरचिता

धर्माधिकारिढुण्ढिराजपन्तशर्मणा

संशोधिता

Benares:

BRAJ B. DAS & Co.,

GENERAL BOOK AGENTS.

1873.

ॐ तत् सत् परमात्मने नमः

# ॥ साङ्ख्यतत्त्वकौमुदी ॥

वाचस्पतिमिश्रविरचिता ॥

पञ्चमः कपिलो नाम सिद्धेशः कालविप्लुतम् ।
प्रोवाचासुरये सांख्यं तत्त्वग्रामविनिर्णयम् ॥ भागवते ॥

॥ श्रीगणेशाय नमः ॥

॥ सांख्यसप्तति: ॥

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां नमामः ।
अजा ये तां जुषमाणां भजन्ते जहत्येनां भुक्तभोगां नुमस्तान् ॥
कपिलाय महामुनये मुनये शिष्याय तस्य चासुरये ।
पञ्चशिखाय तथेश्वरकृष्णायैते नमस्यामः ॥

इह खलु प्रतिपित्सितमर्थं प्रतिपादयन् प्रतिपादयिताऽवधेयवचनो भवति प्रेक्षावताम् अप्रतिपित्सितन्तु प्रतिपादयन्नायं लौकिको नापि परीक्षक इति प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत स चैषां प्रतिपित्सितोऽर्थो यो ज्ञातः सन् परमपुरुषार्थाय कल्पत इति प्रारिप्सितशास्त्रविषयज्ञानस्य परमपुरुषार्थसाधनहेतुत्वात्तद्विषयजिज्ञासामवतारयति ।

दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ ।
दृष्टे सापार्था चेन्नैकान्तात्यन्ततोऽभावात् ॥ १ ॥

तत्र खलु शास्त्रविषयो न जिज्ञास्येत यदि दुःखं नाम जगति न स्यात् सद्वा न जिहासितं जिहासितं वा अशक्यसमुच्छेदम् अशक्यसमुच्छेदता च द्वेधा दुःखस्य नित्यत्वाद्वा तदुच्छेदोपायापरिज्ञानाद्वा, शक्यसमुच्छेदत्वेऽपि च शास्त्रविषयस्य ज्ञानस्यानुपायाद्वा सुकर-

॥ सेवमानाम् प्रीयमाणाञ्च भोगं साधयन्तीं (क)

स्योपायान्तरस्य सद्भावाद्वा । तत्र न तावद्दुःखं नास्ति नाप्यजिहासितमित्युक्तं दुःखत्रयाभिघातादिति । दुःखानां त्रयं दुःखत्रयं तत् खलु आध्यात्मिकमाधिदैविकमाधिभौतिकञ्च । तत्राध्यात्मिकं द्विविधं शारीरं मानसञ्च । शारीरं वातपित्तश्लेष्मणां वैषम्यनिमित्तं मानसं कामक्रोधलोभमोहेर्ष्याविषादविषयविशेषादर्शननिबन्धनम् । सर्वञ्चैतदान्तरोपायसाध्यत्वादाध्यात्मिकं दुःखम् । बाह्योपायसाध्यं च दुःखं द्वेधा आधिभौतिकमाधिदैविकञ्च तत्राधिभौतिकं मानुषपशुपक्षिसरीसृपस्थावरनिमित्तम्, आधिदैविकं यक्षराक्षसविनायकग्रहाद्यावेशनिबन्धनम् तदेतत् प्रत्यात्मवेदनीयं दुःखं रजःपरिणामभेदो न शक्यते प्रत्याख्यातुम् । तदनेन दुःखत्रयेणान्तःकरणवर्त्तिना चेतनाशक्तेः प्रतिकूलतयाभिसम्बन्धोऽभिघात इति । एतावता प्रतिकूलवेदनीयत्वं जिहासाहेतुरुक्तः । यद्यपि च न सन्निरुध्यते दुःखं तथापि तदभिभवः शक्यः कर्त्तुमित्युपरिष्टान्निवेदयिष्यते । तस्मादुपपन्नं तदपघातके हेताविति । तस्य दुःखत्रयस्यापघातकस्तदपघातकः उपसर्जनस्यापि बुद्ध्या समाकृष्टस्य तदा परामर्शः अपघातकश्च हेतुः शास्त्रप्रतिपाद्यो नान्य इत्याशयः ।

अत्राशङ्कते दृष्टे सापार्था चेत् । अयमर्थः अस्तु दुःखत्रयं जिहासितञ्च तद्भवतु भवतु च तच्छक्यहानं सहताञ्च शास्त्रगम्य उपायस्तदुच्छेत्तुं तथाप्यत्र प्रेक्षावतां न युक्ता जिज्ञासा दृष्टस्यैवोपायस्य तदुच्छेदकस्य सुकरस्य विद्यमानत्वात् तत्त्वज्ञानस्य त्वनेकजन्माभ्यासपरम्परायाससाध्यतयातिदुष्करत्वात् । तथा च लौकिका-

गृहकोणे न्यायः नामाभाणकः । ~~अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्~~ । इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेदिति । सन्ति चोपायाः शतशः शारीरदुःखप्रतीकारायेषत्करा भिषजांवरैरुपदिष्टाः । मानसस्यापि

सन्तापस्य प्रतीकाराय मनोज्ञस्त्रीपानभोजनविलेपनवस्त्रालङ्कारादि-विषयप्राप्तिरुपायः सुकरः । एवमाधिभौतिकदुःखस्य नीतिशास्त्रा-भ्यासकुशलतानिरत्ययस्थानाध्यासनादिः प्रतीकारहेतुरीषत्करः । त-थाधिदैविकस्यापि दुःखस्य मणिमन्त्रौषधाद्युपयोगः सुकरः प्रतीका-रोपाय इति । निराकरोति । नेति । कुतः, एकान्तात्यन्ततोऽभावात् ए-कान्तो दुःखनिवृत्तेरवश्यम्भावः अत्यन्तो दुःखस्य निवृत्तस्य पुनरनुत्पा-दस्तयोरेकान्तात्यन्तयोरभाव एकान्तात्यन्ततोऽभाव इति । षष्ठीस्था-ने सार्व्वविभक्तिकस्तसिः । एतदुक्तं भवति यथाविधिरसायनादिका-मिनीनीतिशास्त्राभ्यासमन्त्राद्युपयोगेऽपि तस्य तस्याध्यात्मिकादेर्दुःख-स्य निवृत्तेरदर्शनादनैकान्तिकत्वं, निवृत्तस्यापि पुनरुत्पत्तिदर्शनादना-त्यन्तिकत्वमिति सुकरोऽप्यैकान्तिकात्यन्तिकदुःखनिवृत्तेर्न दृष्ट उ-पाय इति नापार्थी जिज्ञासेत्यर्थः । यद्यपि दुःखममङ्गलं तथापि तत्परिहारार्थत्वेन तदपघातो मंगलमेवेति युक्तं शास्त्रादौ तत्कीर्त्त-नमिति ॥ १ ॥

स्यादेतत् माभूद्दृष्ट उपायो वैदिकस्तु ज्योतिष्टोमादिः सहस्र संवत्सरपर्य्यन्तः कर्म्मकलापस्तापत्रयमेकान्तमत्यन्तञ्चापनेष्यति । श्रु-तिश्च स्वर्गकामोयजेतेति । स्वर्गश्च यन्न दुःखेन सम्भिन्नं न च ग्र-स्तमनन्तरम् । अभिलाषोपनीतञ्च यत् सुखं स्वःपदास्पदमिति ॥ दुःखविरोधी सुखविशेषश्च स्वर्गः स च स्वसत्तया समूलघातमपहन्ति दुःखं, न चैष क्षयी । तथाहि श्रूयते "अपाम सोमममृता अभूमेति" तत्क्षये कुतोऽस्यामृतत्वसम्भवः । तस्माद्वैदिकस्योपायस्य ताप-त्रयप्रतीकारहेतोर्मुहूर्तयामाहोरात्रमाससंवत्सरादिनिर्वर्त्तनीयतयानेकज-न्मपरम्परायाससम्पादनीयाद्विवेकज्ञानादीषत्करत्वात्पुनरप्यपार्था जि-ज्ञासा इत्याशङ्क्याह ।

दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः ।
तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात् ॥ २ ॥

गुरुपाठादनुश्रूयत इत्यनुश्रवो वेदः । एतदुक्तं भवति श्रूयत एव परं न तु केनचित् क्रियत इति तत्र भव आनुश्रविक इति तत्र प्राप्तो ज्ञात इति यावत् आनुश्रविकोऽपि कर्म्मकलापो दृष्टेन तुल्यो वर्त्तत इति ऐकान्तिकात्यन्तिकदुःखप्रतीकारानुपायत्वस्योभयत्रापि तुल्यत्वात् । यद्यपि चानुश्रविक इति सामान्येनाभिहितं तथापि कर्म्मकलापाभिप्रायो द्रष्टव्यः विवेकज्ञानस्याप्यानुश्रविकत्वात् तथाच श्रूयते "आत्मा वा अरे ज्ञातव्यः प्रकृतितो विवेक्तव्यः न स पुनरावर्त्तते न स पुनरावर्त्तते" इति । अस्यां प्रतिज्ञायां हेतुमाह स ह्यविशुद्धिक्षयातिशययुक्तः । अविशुद्धिः सोमादियागस्य पशुवीजादिवधसाधनता । यथाह स्म भगवान् पञ्चशिखाचार्य्यः 'स्वल्पः संकरः सपरिहारः सप्रत्यवमर्ष' इति । स्वल्पः संकरः ज्योतिष्टोमादिजन्मनः प्रधानापूर्व्वस्य पशुहिंसादिजन्मनानर्थहेतुना अपूर्व्वेण । सपरिहारः कियतापि प्रायश्चित्तेन परिहर्तुं शक्यः । अथ प्रमादतः प्रायश्चित्तमपि नाचरितं प्रधानकर्म्मविपाकसमये च पच्यते तथापि यावदसावनर्थं सूते तावत् सप्रत्यवमर्षः प्रत्यवमर्षेण सहिष्णुतया सह वर्त्तत इति मृष्यन्ते हि पुण्यसम्भारोपनीतस्वर्गसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम् ।

न च मा हिंस्यात् सर्व्वा भूतानीति सामान्यशास्त्रं विशेषशास्त्रेणाग्नीषोमीयं पशुमालभेतेत्यनेन बाध्यत इति युक्तं, विरोधाभावात् विरोधे हि बलीयसा दुर्बलं बाध्यते । नचेहास्ति कश्चिद्विरोधः भिन्नविषयत्वात् तथाच न हिंस्यादिति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते न त्वक्रत्वर्थत्वमपि अग्नीषोमीयं पशुमालभेतेत्यनेन तु पशुहिंसायाः क्रत्व-

र्थत्वमुच्यते नानर्थहेतुत्वमभावस्तथा सति वाक्यभेदप्रसङ्गात् न चा-नर्थहेतुत्वक्रतूपकारकत्वयोः कश्चिद्विरोधः हिंसा हि पुरुषस्य दोषमावक्ष्यति क्रतोश्चोपकरिष्यतीति ।

क्षयातिशयौ च फलगतावप्युपाये उपचरितौ क्षयित्वञ्च स्वर्गादेः सत्त्वे सति कार्य्यत्वादनुमितमिति । ज्योतिष्टोमादयः स्वर्गमात्रस्य साधनं वाजपेयादयस्तु स्वाराज्यस्येत्यतिशययुक्तत्वम् । परसम्पदुत्कर्षो हि हीनसम्पदं पुरुषं दुःखाकरोति । अपाम सोमममृता अभूमेति चामृतत्वाभिधानं चिरस्थेमानमुपलक्षयति । यदाहुः 'आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते' इति अत एव च श्रुतिः 'न कर्म्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः । परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति' । तथा 'कर्म्मणा मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमीहमानाः । तथापरे ऋषयो मनीषिणः परं कर्म्मभ्योऽमृतत्वमानशु'रिति । तदेतत्सर्व्वमभिप्रेत्याह, तद्विपरीतः श्रेयान् तस्मादानुश्रविकाद्दुःखापघातकादुपायात् सोमादेरविशुद्धादनित्यसातिशयफलाद्विपरीतो विशुद्धो हिंसादिसंकराभावान्नित्यनिरतिशयफलोऽसकृदपुनरावृत्तिश्रुतेः । न च कार्य्यत्वेनानित्यता फलस्य युक्ता भावकार्य्यस्य तथात्वात् दुःखप्रध्वंसस्य तु कार्य्यस्यापि तद्विपरीत्यात् । न च दुःखान्तरोत्पादः कारणाप्रवृत्तौ कार्य्यानुत्पादात् विवेकज्ञानोपजननपर्य्यन्तत्वाच्च कारणप्रवृत्तेः । एतच्चोपरिष्टादुपपादयिष्यते ।

अक्षरार्थस्तु तस्मादानुश्रविकाद्दुःखापघातकाद्धेतोर्विपरीतः सत्त्वपुरुषान्यताप्रत्ययः साक्षात्कारो दुःखापघातको हेतुः अत एव श्रेयान् आनुश्रविको हि वेदविहितत्वान्मात्रया दुःखापघातकत्वाच्च प्रशस्यः सत्त्वपुरुषान्यताप्रत्ययोऽपि प्रशस्यः तदनयोः प्रशस्ययोर्मध्ये सत्त्वपुरुषान्यताप्रत्ययः श्रेयान् । कुतः पुनरस्योत्पत्तिरित्यत उक्तं व्यक्ता-

व्यक्ताव्यक्तज्ञविज्ञानात् व्यक्तञ्चाव्यक्तञ्च ज्ञश्च व्यक्ताव्यक्तज्ञाः तेषां विज्ञानं विवेकेन ज्ञानम् । व्यक्तज्ञानपूर्व्वकमव्यक्तस्य तत्कारणस्य ज्ञानं तयोश्च पारार्थ्येनात्मा परो ज्ञायत इति ज्ञानक्रमेणाभिधानम् । एतदुक्तम्भवति श्रुतिस्मृतीतिहासपुराणेभ्यो व्यक्तादीन् विवेकेन श्रुत्वा शास्त्रयुक्तया च व्यवस्थाप्य दीर्घकालादरनैरन्तर्य्यसत्कारसेवितात् भावनामयाद्विज्ञानादिति । तथाच वक्ष्यति । एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् । अविपर्य्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानमिति ॥ ९ ॥

तदेवं प्रेक्षावदपेक्षितार्थत्वेन शास्त्रारम्भं समाधाय शास्त्रमारभमाणः श्रोतृबुद्धिसमवधानाय तदर्थं संक्षेपतः प्रतिजानीते ।

**मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।**

**षोड़शकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥ ३ ॥**

संक्षेपतो हि शास्त्रार्थस्य चतस्रो विधाः कश्चिदर्थः प्रकृतिरेव कश्चिदर्थो विकृतिरेव कश्चित् प्रकृतिविकृतिः कश्चिदनुभयरूप इति । तत्र का प्रकृतिरेवेत्यत उक्तम् मूलप्रकृतिरविकृतिः प्रकरोतीति प्रकृतिः प्रधानं सत्त्वरजस्तमसां साम्यावस्था सा अविकृतिः प्रकृतिरेवेत्यर्थः कस्मादित्यत उक्तम् मूलेति मूलञ्चासौ प्रकृतिश्चेति मूलप्रकृतिः विश्वस्य कार्य्यसंघातस्य सा मूलं न त्वस्या मूलान्तरमस्ति अनवस्थाप्रसङ्गात् । न चानवस्थायां प्रमाणमस्तीति भावः । कतमाः पुनः प्रकृतिविकृतयः कियत्यश्चेत्यत उक्तम् महदाद्याः प्रकृतयश्च विकृतयश्च ता इति प्रकृतिविकृतयः सप्तेति । तथाहि महत्तत्त्वमहङ्कारस्य प्रकृतिर्विकृतिश्च मूलप्रकृतेः एवमहङ्कारतत्त्वं तन्मात्राणामिन्द्रियाणाञ्च प्रकृतिर्विकृतिश्च महतः एवं पञ्च तन्मात्राणि तत्त्वानि भूतानामाकाशादीनाम् प्रकृतयो विकृतयश्चाहङ्कारस्य । अथ का विकृतिरेव

कियती चेयत उक्तं षोडशकस्तु विकार इति षोडशसंख्यापरिमितो गणः षोडशकः । तुशब्दोऽवधारणे भिन्नक्रमश्च पञ्च महाभूतान्येकादशेन्द्रियाणि चेति षोडशको गणो विकार एव न प्रकृतिरिति । यद्यपि च पृथिव्यादीनामपि गोघटवृक्षादयो विकाराः एवं तद्विकारभेदानां पयोबीजादीनां दध्यङ्कुरादयस्तथापि गवादयो बीजादयो वा न पृथिव्यादिभ्यस्तत्त्वान्तरं तत्त्वान्तरोपादानत्वञ्च प्रकृतित्वमिहाभिप्रेतमिति न दोषः । सर्व्वेषां गोघटादीनां स्थूलतेन्द्रियग्राह्यता च समेति न तत्त्वान्तरत्वम् । अनुभयरूपमुक्तं तदाह न प्रकृतिर्न विकृतिः पुरुष इति । एतच्च सर्व्वमुपरिष्टादुपपादयिष्यते ॥ ३ ॥

तामिममर्थं प्रामाणिकं कर्त्तुमभिमताः प्रमाणभेदा लक्षणीयाः न च सामान्यलक्षणमन्तरेण शक्यं विशेषलक्षणं कर्त्तुमिति प्रमाणसामान्यं तावल्लक्षयति ।

**दृष्टमनुमानमाप्तवचनं च सर्व्वप्रमाणसिद्धत्वात् ।**
**त्रिविधम्प्रमाणमिष्टम्प्रमेयसिद्धिः प्रमाणाद्धि ॥ ४ ॥**

अत्र च प्रमाणमिति समाख्या लक्ष्यपदं तन्निर्वचनञ्च लक्षणम् प्रमीयतेऽनेनेति निर्वचनात् प्रमां प्रति करणत्वं गम्यते । असन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिर्बोधश्च पौरुषेयः फलं प्रमा तत्साधनम्प्रमाणमिति । एतेन संशयविपर्य्ययस्मृतिसाधनेष्वप्रसङ्गः । संख्याविप्रतिपत्तिं निराकरोति । त्रिविधमिति । तिस्रो विधा अस्य प्रमाणसामान्यस्य त्रिविधमिति न न्यूनं नाप्यधिकमित्यर्थः । विशेषलक्षणानन्तरञ्चैतदुपपादयिष्यामः । कतमाः पुनस्ता विधा इत्यत आह दृष्टमनुमानमाप्तवचनं चेति । एतच्च लौकिकप्रमाणाभिप्रायम् लोकव्युत्पादनार्थत्वाच्छास्त्रस्य तस्यैवात्राधिकारात् आर्षन्तु विज्ञानं योगिनामूर्ध्वस्रोतसाञ्च न लोकव्युत्पादनायालमिति सदपि नाभिहितमनधि-

कारात् । स्यादेतत् मा भून्न्यूनमधिकन्तु कस्मान्न भवति, संगिरन्ते हि वादिन उपमानादीन्यपि प्रमाणानीत्यत आह, सर्व्वप्रमाणसिद्धत्वादिति । एष्वेव दृष्टानुमानाप्तवचनेषु सर्व्वेषां प्रमाणानां सिद्धत्वाद-न्तर्भावादित्यर्थः एतच्चोपपादयिष्यत इत्युक्तम् । अथ प्रमेयव्युत्पादनाय प्रवृत्तं शास्त्रं कस्मात् प्रमाणं सामान्यतो विशेषतश्च लक्षयतीत्यत आह प्रमेयसिद्धिः प्रमाणाद्धीति । सिद्धिः प्रतीतिः । सेयमार्षा अर्थक्रमानुरोधेन पाठक्रममनादृत्य व्याख्याता ॥ ४ ॥

सम्प्रति प्रमाणविशेषलक्षणावसरे प्रत्यक्षस्य प्रमाणेषु ज्येष्ठत्वात्तदधीनत्वाच्चानुमानादीनां सर्व्ववादिनामविप्रतिपत्तेश्च तदेव तावल्लक्षयति ।

**प्रतिविषयाध्यवसायो दृष्टं त्रिविधमनुमानमाख्यातम् ।**
**तल्लिङ्गलिङ्गिपूर्व्वकमाप्तश्रुतिराप्तवचनन्तु ॥ ५ ॥**

अत्र दृष्टमिति लक्ष्यनिर्देशः परिशिष्टन्तु लक्षणं समानासमानजातीयव्यवच्छेदो लक्षणार्थः । अवयवार्थस्तु विसिन्वन्ति विषयिणमनुबध्नन्ति स्वेन रूपेण निरूपणीयं कुर्व्वन्तीति यावत् विषयाः पृथिव्यादयः सुखादयश्चास्मदादीनामविषयाश्च तन्मात्रलक्षणा योगिनामूर्ध्वस्रोतसाञ्च विषयाः । विषयंविषयं प्रति वर्त्तते इति प्रतिविषयमिन्द्रियं वृत्तिश्च सन्निकर्षः अर्थसन्निकृष्टमिन्द्रियमित्यर्थः तस्मिन्नध्यवसायस्तदाश्रित इत्यर्थः अध्यवसायश्च बुद्धिव्यापारो ज्ञानम् उपात्तविषयाणामिन्द्रियाणां वृत्तौ सत्यां बुद्धेस्तमोऽभिभवे सति यः सत्त्वसमुद्रेकः सोऽध्यवसाय इति वृत्तिरिति ज्ञानमिति चाख्यायते इदं तत् प्रमाणम् अनेन यश्चेतनाशक्तेरनुग्रहस्तत् फलं प्रमा बोधः । बुद्धितत्त्वं हि प्राकृतत्वादचेतनमिति तदीयोऽध्यवसायोऽप्यचेतनो घटादिवत् एवं हि बुद्धितत्त्वस्य सुखादयोऽपि परिणामभेदा अचे

नाः पुरुषस्तु सुखाद्यननुषङ्गी चेतनः सोऽयं बुद्धितत्त्ववर्त्तिना ज्ञानसुखादिना तत्प्रतिबिम्बितस्तच्छायापत्त्या ज्ञानसुखादिमानिव भवतीति चेतनोऽनुगृह्यते चितिच्छायापत्त्या चाचेतनापि बुद्धिस्तदध्यवसायोऽप्यचेतनश्चेतन इव भवतीति । तथा च वक्ष्यति । तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् । गुणकर्तृत्वेऽपि तथा कर्त्तेव भवत्युदासीन इति । अत्राध्यवसायग्रहणेन संशयं व्यवच्छिनत्ति संशयस्य अनवस्थितग्रहणेनानिश्चितरूपत्वात् निश्चयोऽध्यवसाय इत्यनर्थान्तरम् । विषयग्रहणेन चासद्विषयं विपर्ययमपाकरोति प्रतिग्रहणेन चेन्द्रियार्थसन्निकर्षसूचनादनुमानस्मृत्यादयः पराहता भवन्ति । तदेवं समानासमानजातीयव्यवच्छेदकत्वात् प्रतिविषयाध्यवसाय इति दृष्टस्य सम्पूर्णं लक्षणम् । लक्षणान्तराणि तु तैर्थिकानां न दूषितानि विस्तरभयादिति

नानुमानम्प्रमाणमिति वदता लौकायतिकेनाप्रतिपन्नः सन्दिग्धो विपर्य्यस्तो वा पुरुषः कथं प्रतिपाद्येत न च पुरुषान्तरगता अज्ञानसन्देहविपर्यासाः शक्या अर्वाग्दृशा प्रत्यक्षेण प्रतिपत्तुं नापि मानान्तरेण, अनभ्युपगमात्, अनवधृताज्ञानसंशयविपर्य्यासस्तु यं कंचित् पुरुषं प्रति प्रवर्त्तमानोऽनवधेयवचनतया प्रेक्षावद्भिरुन्मत्तवदुपेक्ष्येत तदनेनाज्ञानादयः परपुरुषवर्त्तिनोऽभिप्रायभेदाद्वचनभेदाद्वा लिङ्गादनुमातव्या इत्यकामेनाप्यनुमानम्प्रमाणमभ्युपेतव्यम् । तत्र प्रत्यक्षकार्य्यत्वादनुमानं प्रत्यक्षानन्तरं लक्षणीयं तत्रापि सामान्यलक्षणपूर्व्वकत्वाद्विशेषलक्षणस्यानुमानसामान्यं तावल्लक्षयति । तल्लिङ्गलिङ्गिपूर्व्वकमिति । लिङ्गं व्याप्यं लिङ्गि व्यापकं शङ्कितसमारोपितोपाधिनिराकरणेन वस्तु स्वभावप्रतिबद्धं व्याप्यं येन च प्रतिबद्धं तद्व्यापकम् । लिङ्गलिङ्गिग्रहणेन च विषयवाचिना विषयिणं प्र-

प्रत्ययमुपलक्षयति धूमादिर्व्याप्यो वह्न्यादिर्व्यापक इति यः प्रत्ययस्तत्पूर्व्वकम्। लिङ्गिग्रहणञ्चावर्त्तनीयं तेन लिङ्गमस्यास्तीति पक्षधर्म्मताज्ञानमपि दर्शितं भवति। तद्व्याप्यव्यापकभावपक्षधर्म्मताज्ञानपूर्व्वकमनुमानमित्यनुमानसामान्यं लक्षितम्। अनुमानविशेषान् तन्त्रान्तरलक्षितान् अभिमतान् स्मारयति। त्रिविधमनुमानमाख्यातं तदिति। तत्सामान्यतोलक्षितमनुमानं विशेषतस्त्रिविधम् पूर्व्ववत् शेषवत् सामान्यतोदृष्टञ्च। तत्र प्रथमं तावत् द्विविधं वीतमवीतञ्च अन्वयमुखेन प्रवर्त्तमानं विधायकं वीतं व्यतिरेकमुखेन प्रवर्त्तमानं निषेधकमवीतम्। तत्रावीतं शेषवत् शिष्यते परिशिष्यते इति शेषः सएव विषयतया यस्यास्त्यनुमानज्ञानस्य तच्छेषवत्। यदाहुः प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः परिशेषइति। अस्य चावीतस्य व्यतिरेकिण उदाहरणमग्रेऽभिधास्यते। वीतञ्च द्वेधा पूर्व्ववत् सामान्यतोदृष्टञ्च। तत्रैकं दृष्टस्वलक्षणसामान्यविषयं यत् तत्पूर्व्ववत् पूर्व्वं प्रसिद्धं दृष्टस्वलक्षणसामान्यमिति यावत् तदस्य विषयत्वेनास्त्यनुमानज्ञानस्येति पूर्व्ववत् यथा धूमाद्वह्नित्वसामान्यविशेषः पर्व्वतेऽनुमीयते तस्य च वह्नित्वसामान्यविशेषस्य स्वलक्षणवह्निविशेषो दृष्टो रसवत्याम्। अपरञ्च वीतं सामान्यतोदृष्टम् अदृष्टस्वलक्षणसामान्यविषयं यथेन्द्रियविषयमनुमानम्। अत्र हि रूपादिज्ञानानां क्रियात्वेन करणत्वमनुमीयते। यद्यपि च करणत्वसामान्यस्य छिदादौ वास्यादि स्वलक्षणमुपलब्धं तथापि यज्जातीयं रूपादिज्ञाने करणत्वमनुमीयते तज्जातीयस्य करणत्वस्य न दृष्टं स्वलक्षणं प्रत्यक्षेण, इन्द्रियजातीयं हि तत् करणं नचेन्द्रियत्वस्य सामान्यस्य स्वलक्षणमिन्द्रियविशेषः प्रत्यक्षगोचरोऽर्व्वाग्दृशां यथा वह्नित्वस्य सामान्यस्य स्वलक्षणं वह्निः। सोऽयं पूर्व्ववतः सामान्यतोदृष्टात् सत्यपि वीतत्वेन

तुल्यत्वे विशेषः। अत्र दृष्टं दर्शनं सामान्यतइति सामान्यस्य सार्वविभक्तिकस्तसिः। अदृष्टस्वलक्षणस्य सामान्यविशेषस्य दर्शनमनुमानमित्यर्थः। सर्वञ्चैतदस्माभिर्न्यायवार्त्तिकतात्पर्य्यटीकायां व्युत्पादितं नेहोक्तं विस्तरभयादिति।

प्रयोजकवृद्धशब्दश्रवणसमनन्तरम् प्रयोज्यवृद्धप्रवृत्तिहेतुकज्ञानानुमानपूर्वकत्वाच्छब्दार्थसम्बन्धग्रहणस्य स्वार्थसम्बन्धज्ञानसहकारिणश्च शब्दस्यार्थप्रत्यायकत्वादनुमानपूर्वकत्वमित्यनुमानानन्तरं शब्दं लक्षयति। आप्तश्रुतिराप्तवचनन्त्विति। तत्राप्तवचनमिति लक्ष्यनिर्देशः पारिशिष्टं लक्षणम् आप्ता प्राप्ता युक्तेति यावत्, आप्ता चासौ श्रुतिश्चेति आप्तश्रुतिः श्रुतिर्वाक्यजनितं वाक्यार्थज्ञानं तच्च स्वतः प्रमाणम् अपौरुषेयवेदवाक्यजनितत्वेन च सकलदोषाशङ्काविनिर्मुक्तेर्युक्तं भवति एवं वेदमूलस्मृतीतिहासपुराणवाक्यजनितमपि ज्ञानं युक्तम् आदिविदुषश्च कपिलस्य कल्पादौ कल्पान्तराधीतश्रुतिस्मरणसम्भवः सुप्तप्रबुद्धस्येव पूर्व्वेद्युरवगतानामर्थानामपरेद्युः। तथाचावट्यजैगीषव्यसंवादे भगवान् जैगीषव्यो दशमहाकल्पवर्त्तिजन्मस्मरणमात्मन उवाच दशसु महाकल्पेषु विपरिवर्त्तमानेन मयेत्यादिना ग्रन्थसन्दर्भेण। आप्तग्रहणेन चायुक्ताः शाक्यभिक्षुनिर्ग्रन्थकसंसारमोचकादीनामागमाभासा निरस्ता भवन्ति। अयुक्तत्वञ्चैतेषां विगानात् छिन्नमूलत्वात् प्रमाणविरुद्धार्थाभिधानात् कैश्चिदेव च म्लेच्छादिभिः पुरुषापसदैः पशुप्रायैः परिग्रहाद्बोद्धव्यम्। तुशब्देनानुमानाद्व्यवच्छिनत्ति वाक्यार्थो हि प्रमेयो न तु तद्धर्मो वाक्यं येन तत्र लिङ्गं भवेत् न च वाक्यं वाक्यार्थं बोधयत्सम्बन्धग्रहणमपेक्षते अभिनवकविविरचितस्य वाक्यस्यादृष्टपूर्वस्याननुभूतचरवाक्यार्थबोधकत्वादिति।

एवं प्रमाणसामान्यलक्षणेषु तद्विशेषलक्षणेषु च सत्सु यानि प्र-

माणान्तराण्युपमानादीन्यभ्युपेयन्ते प्रतिवादिभिस्तान्युक्तलक्षणेषु प्रमाणेषु अन्तर्भवन्ति। तथाहि। उपमानं तावत् यथा गौस्तथा गवय इति वाक्यं तज्जनिता धीरागम एव। योऽप्ययं गवयशब्दो गोसदृशस्य वाचक इति प्रत्ययः सोऽप्यनुमानं यो हि शब्दो यत्र वृद्धैः प्रयुज्यते सोऽसति वृत्यन्तरे तस्य वाचको यथा गोशब्दो गोत्वस्य। प्रयुज्यते चैष गवयशब्दो गोसदृशे इति तस्यैव वाचक इति ज्ञानमनुमानमेव यत्तु गवयस्य चक्षुःसन्निकृष्टस्य गोसादृश्यज्ञानं तत् प्रत्यक्षम्। अत एव स्मर्य्यमाणायां गवि गवयसादृश्यज्ञानं प्रत्यक्षं न ह्यन्यत् गवि सादृश्यमन्यच्च गवये भूयोऽवयवसामान्ययोगो हि जात्यन्तरवर्त्ती जात्यन्तरे सादृश्यमुच्यते सामान्ययोगश्चैकः स चेद्गवये गृहीतो गव्यपि तथेति नोपमानस्य प्रमेयान्तरमस्ति, यत्र प्रमाणमुपमानं भवेदिति न प्रमाणान्तरमुपमानम्। एवमर्थापत्तिरपि न प्रमाणान्तरं तथाहि जीवतश्चैत्रस्य गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पनमर्थापत्तिरभिमता वृद्धानां साप्यनुमानमेव यदा खल्वव्यापकः सन्नेकत्र नास्ति तदान्यत्रास्ति यदाऽव्यापकएकत्रास्ति तदान्यत्र नास्तीति सुकरः स्वशरीरे व्याप्तिग्रहः। तथाच सतो गृहाभावदर्शनेन लिङ्गेन बहिर्भावदर्शनमनुमानमेव न च चैत्रस्य क्वचित् सत्त्वेन गृहाभावः शक्योऽपन्होतुं येनासिद्धो गृहाभावो बहिर्भावे न हेतुःस्यात् न च गृहाभावेन वा सत्त्वमपन्हूयेत येन सत्त्वमेवानुपपद्यमानमात्मानं न बहिरवस्थापयेत् तथाहि चैत्रस्य गृहासत्त्वेन सत्त्वमात्रं वा विरुध्यते, गृहसत्त्वं वा न तावद्यत्र क्व चन सत्त्वस्यास्ति विरोधो गृहासत्त्वेन भिन्नविषयत्वात् देशसामान्येन गृहविशेषाक्षेपोऽपि पाक्षिक इति समानविषयतया विरोध इति चेन्न। प्रमाणानिश्चितस्य गृहेऽसत्त्वस्य पाक्षिकतया सांशयिकेन गृहसत्त्वेन प्रतिक्षेपायोगात्, नापि प्रमाणनिश्चि

तो गृहाभावः पाक्षिकमस्य गृहसत्त्वं प्रतिक्षिपन् सत्त्वमपि प्रतिक्षेप्तुं सांशयिकत्वं चापनेतुमर्हतीति युक्तं, गृहावच्छिन्नेन चैत्राभावेन गृहसत्त्वं विरुद्धत्वात् प्रतिक्षिप्यते न तु सत्त्वमात्रं, तस्य तत्रौदासीन्यात्। तस्मात् गृहाभावेन लिङ्गेन सिद्धेन सतो बहिर्भावो ऽनुमीयत इति युक्तम्। एतेन विरुद्धयोः प्रमाणयोर्विषयव्यवस्थया विरोधापादनमर्थापत्तेर्विषय इति परास्तम्, अवच्छिन्नानवच्छिन्नयोर्विरोधाभावात्। उदाहरणान्तराणि चार्थापत्तेरेवमेवानुमानेऽन्तर्भावनीयानीति। तस्मान्नानुमानात् प्रमाणान्तरमर्थापत्तिरिति सिद्धम्। एवमभावोऽपि प्रत्यक्षमेव, न हि भूतलस्य परिणामविशेषात् कैवल्यलक्षणात् अन्यो घटाभावो नाम, प्रतिक्षणपरिणामिनो हि सर्व एव भावा ऋते चितिशक्तेः स च परिणामभेद ऐन्द्रियक इति नास्ति प्रत्यक्षानवरुद्धो विषयो यत्राभावाख्यं प्रमाणान्तरमभ्युपेयमिति। सम्भवस्तु यथा खार्य्यां द्रोणाढकप्रस्थाद्यवगमः स चानुमानमेव, खारीत्वं हि द्रोणाद्यविनाभूतं प्रतीतं खार्य्यां द्रोणादिसत्त्वमवगमयतीति। यच्चानिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्य्यमात्रमिति होचुर्वृद्धा ऐतिह्यम्, यथा, इह वटे यक्षः प्रतिवसतीति, न तत् प्रमाणमनिर्दिष्टप्रवक्तृकत्वेन सांशयिकत्वात् आप्तप्रवक्तृकत्वनिश्चये त्वागम इत्युपपन्नं त्रिविधम्प्रमाणमिति ॥ ५ ॥

एवन्तावद्व्यक्ताव्यक्तज्ञलक्षणप्रमेयसिद्ध्यर्थं प्रमाणानि लक्षितानि। तत्र व्यक्तं पृथिव्यादि स्वरूपतः पांशुलपादको हालिकोऽपि प्रत्यक्षतः प्रतिपद्यते पूर्ववता चानुमानेन धूमादिदर्शनात् वह्न्यादीति तद्व्युत्पादनाय मन्दप्रयोजनं शास्त्रमिति दुरधिगममनेन व्युत्पादनीयम्। तत्र यत् प्रमाणं यत्र समर्थं तदुक्तलक्षणेभ्यः प्रमाणेभ्यो निष्कृष्य दर्शयति।

ऐतिह्यं – [illegible] टीका

**सामान्यतस्तु दृष्टादतीन्द्रियाणां प्रतीतिरनुमानात् ।**
**तस्मादपि चासिद्धं परोक्षमाप्तागमात् सिद्धम् ॥ ६ ॥**

तुशब्दः प्रत्यक्षपूर्ववद्भ्यां विशिनष्टि । सामान्यतोदृष्टादनुमानादध्यवसायादतीन्द्रियाणां प्रधानपुरुषादीनाम् [illegible] । [illegible] शेषवत इत्यपि द्रष्टव्यम् । तत् किं सर्व्वेष्वतीन्द्रियेषु सामान्यतोदृष्टमेव प्रवर्त्तते तथा च यत्र तन्नास्ति महदाद्यारम्भक्रमे स्वर्गापूर्व्वदेवतादौ च तेषामभावः प्राप्त इत्यत आह । तस्मादपीति । तस्मादपीत्येतावतैव सिद्धे चकारेण शेषवत इत्यपि समुच्चितमिति ॥ ६ ॥

स्यादेतत् । यथा गगनकुसुमकूर्म्मरोमशशविषाणादिषु प्रत्यक्षमप्रवर्त्तमानं तदभावमवगमयत्येवं प्रधानादिष्वपि तत् कथं तेषां सामान्यतोदृष्टादिभ्यः सिद्धिरित्यत आह ।

**अतिदूरात् सामीप्यादिन्द्रियघातान्मनोऽनवस्थानात् ।**
**सौक्ष्म्याद्व्यवधानादभिभवात् समानाभिहाराच्च ॥ ७ ॥**

अनुपलब्धिरिति वक्ष्यमाणं सिंहावलोकितन्यायेनानुषञ्जनीयम् यथा उत्पतन् वियति पतत्री अतिदूरतया सन्नपि प्रत्यक्षेण नोपलभ्यते, सामीप्यादित्यत्राप्यतिरनुवर्त्तनीयः यथा लोचनस्थमञ्जनमतिसामीप्यान्न दृश्यते, इन्द्रियघातोऽन्धत्वबधिरत्वादिः, मनोऽनवस्थानात् यथा कामाद्युपहतमनाः स्फीतालोकमध्यवर्त्तिनमिन्द्रियसन्निकृष्टमप्यर्थं न पश्यति, सौक्ष्म्यात् यथा इन्द्रियसन्निकृष्टं परमाण्वादि प्रणिहितमना अपि न पश्यति, व्यवधानात् यथा कुड्यादिव्यवहितं राजदारादि न पश्यति, अभिभवात् यथा अहनि सौरीभिर्भाभिरभिभूतं ग्रहनक्षत्रमण्डलं न पश्यति, समानाभिहारात् यथा तोयदविमुक्तानुदविन्दून् जलाशये न पश्यति । चकारोऽनुक्तसमुच्चयार्थः [illegible]ऽपि संगृहीतः

तद्यथा क्षीराद्यवस्थायां दध्याद्यनुद्भवान्न दृश्यते । एतदुक्तम्भवति न प्रत्यक्षनिवृत्तिमात्राद्वस्त्वभावो भवत्यतिप्रसङ्गात् तथाहि न हि गृहाद्बहिर्निर्गतो गृहजनमपश्यंस्तदभावं निश्चिनुयात् अपि तु योग्यप्रत्यक्षनिवृत्त्या तदभावं निश्चिनोति न च प्रधानपुरुषादीनामस्ति प्रत्यक्षयोग्यतेति न तन्निवृत्तिमात्रात्तदभावनिश्चयो युक्तः प्रामाणिकानामिति ॥ ७ ॥

कतमत् पुनरेतेषु कारणम्प्रधानादीनामनुपलब्धावित्यत आह ।

**सौक्ष्म्यात्तदनुपलब्धिर्नाभावात् कार्य्यतस्तदुपलब्धेः ।**
**महदादि तच्च कार्य्यम्प्रकृति सरूपं विरूपं च ॥ ८ ॥**

अथाभावादेव सप्तमरसवदेतेषामनुपलब्धिः कस्मान्न भवतीत्यत आह । नाभावात् । कुतः कार्य्यतस्तदुपलब्धेः तदिति प्रधानम्परामृशति । पुरुषोपलब्धौ तु प्रमाणं वक्ष्यति संघातपरार्थत्वादिति । इदन्तरप्रमाणावधारिते हि प्रत्यक्षमप्रवर्त्तमानमयोग्यत्वान्न प्रवर्त्तत इति कल्प्यते सप्तमस्तु रसो न प्रमाणेनावधारित इति न तत्र प्रत्यक्षस्यायोग्यता शक्याध्यवसातुमिति भावः । किं पुनस्तत् कार्य्यं यतः प्रधानानुमानमित्यत आह । महदादि तच्च कार्य्यम् । एतच्च यथा गमकं तथोपरिष्टादुपपादयिष्यते । तस्य च कार्य्यस्य विवेकज्ञानोपयोगिनी सारूप्यवैरूप्ये आह । प्रकृतिसरूपं विरूपञ्च । एते चोपरिष्टाद्विभजनीये ॥ ८ ॥

कार्य्यात्कारणमात्रं गम्यते । सन्ति चात्र वादिनां विप्रतिपत्तयः । केचिदाहुरसतः सज्जायत इति । एकस्य सतो विवर्त्तः कार्य्यंजातं न वस्तु सदित्यपरे । अन्ये तु सतोऽसज्जायत इति । सतः सज्जायत इति वृद्धाः । तत्र पूर्वस्मिन् कल्पत्रये प्रधानं न सिध्यति । सुखदुःखमोहभेदवत्स्वरूपपरिणामशब्दाद्यात्मकं हि जगत् कारणस्य

प्रधानस्य प्रधानत्वं सत्त्वरजस्तमःस्वभावत्वं गमयति । यदि पुनरसतः सज्जायेत [असन्निरूपाख्यं] कार्य्यं कथं सुखादि[illegible]शब्दाद्यात्मकं स्यात्, सदसतोस्तादात्म्यानुपपत्तेः । अथैकस्य सतो विवर्त्तः शब्दादिप्रपञ्चस्तथापि सतः सज्जायत इति न स्यात् । न चाद्वयस्य प्रपञ्चात्मकत्वमपि त्वप्रपञ्चस्य प्रपञ्चात्मकतया प्रतीतिर्भ्रम एव । येषामपि कणभक्षाक्षचरणादीनां सत एव कारणादसतो जन्म तेषामपि सदसतोरेकत्वानुपपत्तेर्न कार्य्यात्मकं कारणमिति न प्रधानसिद्धिः अतः प्रधानसिद्ध्यर्थं प्रथमं तावत्सत्कार्य्यं प्रतिजानीते ।

**असदकरणादुपादानग्रहणात्सर्व्वसम्भवाभावात् ।**
**शक्तस्य शक्यकरणात्कारणभावाच्च सत्कार्य्यम् ॥ ९ ॥**

सत् कार्य्यं कारणव्यापारात् प्रागपीति शेषः । तथा च न सिद्धसाधनं नैयायिकतनयैरुद्भावनीयम् । यद्यपि बीजमृत्पिण्डादिप्रध्वंसानन्तरमङ्कुरघटाद्युत्पत्तिरुपलभ्यते तथापि न प्रध्वंसस्य कारणत्वमपि तु भावस्यैव बीजाद्यवयवस्य । अभावात्तु भावोत्पत्तौ तस्य सर्व्वत्र सुलभत्वात्सर्व्वत्र सर्व्वकार्य्योत्पादप्रसङ्ग इत्यादि न्यायवार्त्तिकतात्पर्य्यटीकायामभिहितमस्माभिः । [illegible] नापेक्षे न शा[illegible] कणभक्षाक्षचरणमतमवशिष्यते । तत्रेदं प्रतिज्ञातं सत्कार्य्यमिति । अत्र हेतुमाह । असदकरणात् । असच्चेत् कारणव्यापारात्पूर्व्वं कार्य्यं नास्य सत्त्वं केनापि कर्त्तुं शक्यं नहि नीलं शिल्पिसहस्रेणापि शक्यं पीतं कर्त्तुं सदसत्त्वे घटस्य धर्म्माविति चेत् तथाप्यसति धर्म्मिणि न तस्य धर्म्म इति सत्त्वं तदवस्थमेव तथा च नासत्त्वम् [illegible]सम्बन्धेनातदात्मना वाऽसत्त्वेन कथमसन् घटः तस्मात्कारणव्यापारादूर्द्ध्वमिव [illegible] प्रागपि सदेव कार्य्यमिति । कारणव्यापारात्तु सतोऽभिव्यक्तिरेवावशिष्यते । सतश्चाभिव्यक्तिरुपपन्ना । यथा पीडनेन

तिलेषु तैलस्य अवघातेन धान्येषु तण्डुलानां दोहनेन सौरभेयीषु पयसः। [redacted] तु न निदर्शनं किञ्चिदस्ति। न खल्व भिव्यज्यमानं चोत्पद्यमानं वा क्वचिदसद्दृष्टम्। इतश्च कारणव्यापारात् प्राक् सदेव कार्य्यमित्याह। [redacted]। उपादानानि कारणानि तेषां ग्रहणं कार्य्येण सम्बन्धः उपादानैः कार्य्यस्य सम्बन्धादिति यावत्। एतदुक्तं भवति। कार्य्येण संबद्धं कारणं कार्य्यस्य जनकं सम्बन्धश्च कार्य्यस्यासतो न सम्भवति तस्मात्सदिति। स्यादेतत् असम्बद्धमेव कारणैः कस्मात्कार्य्यं न जन्यते तथा चासदेवोत्पद्यतेऽत आह। सर्वसम्भवाभावात्। असंबद्धस्य जन्यत्वे असम्बद्धत्वाविशेषेण सर्वं कार्य्यजातं सर्वस्माद्भवेत् न चैतदस्ति तस्मान्नासम्बद्धमसम्बद्धेन जन्यते अपि तु संबद्धं संबद्धेन जन्यते इति। यथाहुः सांख्यवृद्धाः [redacted]। स्यादेतत् असम्बद्धमपि सत्तदेव करोति यत्र यत्कारणं शक्तम् शक्तिश्च कार्य्यदर्शनादवगम्यते अतो नाव्यवस्थेति [redacted]। शक्तस्य शक्यकरणात्। सा शक्तिः शक्तकारणाश्रया सर्वत्र वा स्याच्छक्ये वा। सर्वत्र चेत्तदवस्थैवाव्यवस्था शक्ये चेत्कथमसति शक्ये तत्रेति वक्तव्यम्। शक्तिभेद एव स तादृशो यतः किञ्चिदेव कार्य्यं जनयेन्न सर्वमिति चेत् हन्त भोः शक्तिविशेषः कार्य्यसम्बद्धो वा स्यादसम्बद्धो वा सम्बद्धत्वे नासता सम्बन्ध इति सत्कार्य्यम् असम्बद्धत्वे सैवाव्यवस्थेति सुष्ठूक्तं शक्तस्य शक्यकरणादिति। इतश्च सत्कार्य्यमित्याह। कारणभावाच्च। कार्य्यस्य कारणात्मकत्वात् न हि कारणाद्भिन्नं कार्य्यं कारणञ्च सदिति कथं तदभिन्नं कार्य्यमसद्भवेत् कार्य्यस्य कारणाभेदसाधकानि च प्रमाणानि न पटस्तन्तुभ्यो भिद्यते तद्धर्मत्वात् इह यद्यतो भिद्य-

ते तत्तस्य धर्म्मो न भवति । यथा गौरश्वस्य । धर्म्मश्च पटस्तन्तूनां तस्मान्नार्थान्तरम् । उपादानोपादेयभावाच्च नार्थान्तरत्वं तन्तुपटयोः ययोरर्थान्तरत्वं न तयोरुपादानोपादेयभावः यथा घटपटयोः उपादानोपादेयभावश्च तन्तुपटयोः तस्मान्नार्थान्तरत्वमिति । इतश्च नार्थान्तरत्वं तन्तुपटयोः संयोगाप्राप्त्यभावात् अर्थान्तरत्वे हि संयोगो दृष्टो यथा कुण्डबदरयोः अप्राप्तिर्वा यथा हिमवद्विन्ध्ययोः न चेह संयोगाप्राप्ती तस्मान्नार्थान्तरत्वमिति । इतश्च पटस्तन्तुभ्यो न भिद्यते गुरुत्वान्तरकार्याग्रहणात् इह यद्यस्माद्भिन्नं तस्मात्तस्य गुरुत्वान्तरकार्य्यं गृह्यते यथैकपलिकस्य स्वस्तिकस्य यो गुरुत्वकार्य्योऽवनतिविशेषस्ततो द्विपलिकस्य स्वस्तिकस्य गुरुत्वकार्य्योऽवनतिविशेषोऽधिकः न च तथा तन्तुगुरुत्वकार्य्यात्पटगुरुत्वस्य कार्य्यान्तरं दृश्यते तस्मादभिन्नस्तन्तुभ्यः पट इति । तान्येतान्यवीतान्यभेदसाधनानि । तदेवमभेदे सिद्धे तन्तव एव तेन तेन संस्थानभेदेन परिणताः पटो न तन्तुभ्योऽर्थान्तरं पटः । स्वात्मनि क्रियाविरोधबुद्धिव्यपदेशार्थक्रियाभेदाश्च नैकान्तिकं भेदं साधयितु मर्हन्ति एकस्मिन्नपि तत्तद्विशेषाविर्भावतिरोभावाभ्यामेतेषामविरोधात् । यथा हि कूर्म्मस्याङ्गानि कूर्म्मशरीरे निविशमानानि तिरो भवन्ति निःसरन्ति चाविर्भवन्ति न तु कूर्म्मतस्तदङ्गान्युत्पद्यन्ते प्रध्वंसन्ते वा एवमेकस्या मृदः सुवर्णस्य वा घटमुकुटादयो विशेषा निस्सरन्त आविर्भवन्त उत्पद्यन्त इत्युच्यन्ते निविशमानास्तिरोभवन्तो विनश्यन्तीत्युच्यन्ते न पुनरसतामुत्पादः सतां वा निरोधः । यथाह भगवान् कृष्णद्वैपायनः "नासतो विद्यते भावो नाभावो विद्यते सत इति । यथा कूर्म्मः स्वावयवेभ्यः सङ्कोचिविकाशिभ्यो न भिन्नः एवं घटमुकुटादयोऽपि मृत्सुवर्णादिभ्यो न भिन्नाः । एवञ्चेह तन्तुषु पट इति व्यपदेशोऽपि यथेह

वने तिलका इत्युपपन्नः। नचार्थक्रियाभेदोऽपि भेदमापादयति ए-
कस्यापि नानार्थक्रियादर्शनात् यथैक एव वह्निर्दाहकः प्रकाशकः
पाचकश्चेति। नाप्यर्थक्रियाव्यवस्था वस्तुभेदे हेतुः तेषामेव समस्त-
व्यस्तानामर्थक्रियाव्यवस्थादर्शनात् यथा प्रत्येकं विष्टयो वर्त्मदर्शन-
लक्षणामर्थक्रियां कुर्वन्ति न तु शिविकावहनम् मिलितास्तु शिविकां
वहन्ति एवं तन्तवः प्रत्येकं प्रावरणमकुर्वाणा अपि मिलिता आवि-
र्भूतपटभावाः प्रावरिष्यन्ति। स्यादेतत् आविर्भावः पटस्य कारण-
व्यापारात् प्राक् सन्नसन्वा। असंश्चेत् प्राप्तं तर्ह्यसत उत्पादनम् अथ
सन् कृतं तर्हि कारणव्यापारेण न हि सति कार्य्ये कारणव्यापारप्र-
योजनं पश्यामः आविर्भावे चाविर्भावान्तरकल्पनेऽनवस्थाप्रसङ्गः।
तस्मादाविर्भूतपटभावास्तन्तवः क्रियन्त इति रिक्तं वचः। अथासदु-
त्पद्यत इत्यत्रापि मते केयमसदुत्पत्तिः सती असती वा सती चेत्
कृतं तर्हि कारणैः असती चेत्तस्या अप्युत्पत्त्यन्तरमित्यनवस्था। अ-
थोत्पत्तिः पटान्नार्थान्तरम् अपि तु पट एवासौ तथापि यावदुक्तं भव-
ति पट इति तावदुक्तं भवत्युत्पद्यत इति। ततश्च पट इत्युक्ते उत्पद्यत
इति न वाच्यं पौनरुक्त्यात् विनश्यतीत्यपि न वाच्यं उत्पत्तिविनाश-
योर्युगपदेकत्र विरोधात्। तस्मादियं पटोत्पत्तिः स्वकारणसमवायो
वा स्वसत्तासमवायो वा उभयथापि नोत्पद्यते अथ च तदर्थानि कार-
णानि व्याप्रार्यन्ते एवं सत एव पटादेराविर्भावाय कारणापेक्षेत्युपप-
न्नम्। न च पटरूपेण कारणानां सम्बन्धस्तद्रूपस्याक्रियात्वात् क्रिया-
सम्बन्धित्वाच्च कारणानाम् अन्यथा कारणत्वाभावात् तस्मात्सत्कार्य्य-
मिति पुष्कलम्॥ ९॥

तदेवं प्रधानसाधनानुगुणं सत्कार्य्यमुपपाद्य यादृशं तत् प्रधानं
साधनीयं तादृशमादर्शयितुं विवेकज्ञानोपयोगिनी व्यक्ताव्यक्तसाधर्म्य-

वैरूप्यं तावदाह ।

**हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् ।**
**सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥ १० ॥**

व्यक्तं [illegible] हेतुः कारणं तद्वत् । यस्य च यो हेतुस्तस्य तमुपरिष्टाद्वक्ष्यति । [illegible] विनाशि तिरोभावीति यावत् [illegible] सर्वं परिणामिनं न व्याप्नोति कारणेन हि कार्य्यमाविष्टं न कार्य्येण कारणं न च बुद्ध्यादयः प्रधानं वेविषतीत्यव्यापकाः । [illegible] परिस्पन्दवत् तथाहि बुद्ध्यादय उपात्तमुपात्तं देहं त्यजन्ति देहान्तरञ्चोपाददत इति तेषां परिस्पन्दः शरीरपृथिव्यादीनाञ्च परिस्पन्दः प्रसिद्ध एव [illegible] प्रतिपुरुषं बुद्ध्यादीनां भेदात् पृथिव्याद्यपि शरीरघटादिभेदेनानेकमेव । आश्रितं स्वकारणमाश्रितं बुद्ध्यादिकार्य्यम् अभेदेऽपि कथञ्चिद्भेदविवक्षया आश्रयाश्रयिभावः यथेह वने तिलकाः इत्युक्तम् । लिङ्गं प्रधानस्य यथा चैते बुद्ध्यादयः प्रधानस्य लिङ्गं तथोपरिष्टाद्वक्ष्यति, प्रधानं तु न प्रधानस्य लिङ्गं पुरुषस्य लिङ्गंभवेदपीति भावः । सावयवं अवयवनमवयवो मिथःसंश्लेषोमिश्रणं संयोग इति यावत् अप्राप्तिपूर्व्विका प्राप्तिः [illegible] तेन सह वर्त्तत इति सावयवं तथाहि पृथिव्यादयः परस्परं संयुज्यन्ते एवमन्येऽपि न तु प्रधानस्य बुद्ध्यादिभिः संयोगस्तादात्म्यात् नापि सत्वरजस्तमसां परस्परं संयोगःअप्राप्तेरभावात् [illegible] बुद्ध्यादि बुद्धिः स्वकार्य्येऽहङ्कारे जनयितव्ये प्रकृत्यापूरोऽपेक्ष्यते अन्यथा क्षीणा सती नालं महङ्कारं जनयितुमिति स्थितिः । एवमहङ्कारादिभिरपि स्वकार्य्यजनने इति सर्व्वं स्वकार्य्ये प्रकृत्यापूरमपेक्षते तेन प्रकृतिं परामपेक्षमाणं कारणमपि स्वकार्य्योपजनने परतन्त्रं व्यक्तम् । विपरीतमव्यक्तं व्यक्तात् अहेतुमन्नित्यं व्यापि [illegible] । यद्यप्यव्यक्तस्या-

स्ति परिणामलक्षणा क्रिया तथापि परिस्पन्दो नास्ति । एकमनाश्रितमलिङ्गमनवयवं स्वतन्त्रमव्यक्तम् ॥ १० ॥

एवं प्रबन्धेन व्यक्ताव्यक्तयोर्वैधर्म्म्यमुक्तम् । सम्प्रति तयोः साधर्म्म्यं पुरुषाच्च वैधर्म्म्यमाह ।

**त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्म्मि ।**
**व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥ ११ ॥**

त्रिगुणम् त्रयो गुणाः सुखदुःखमोहा अस्येति त्रिगुणं तदनेन सुखादीनामात्मगुणत्वं पराभिमतमपाकृतम् । अविवेकि । यथा प्रधानं न स्वतो विविच्यते एवं महदादयोऽपि न प्रधानाद्विविच्यन्ते तदात्मकत्वात् अथवा संभूयकारित्वमविवेकः । न हि किञ्चिदेकं पर्य्याप्तं २
स्वकार्य्ये अपि तु संम्भूय तत्र नैकस्मात्कस्य चित्केन चित्सम्भव इति । ये त्वाहुर्विज्ञानमेव हर्षविषादमोहशब्दाद्यात्मकं न पुनरितोऽन्यस्तद्धर्मेति तान् प्रत्याह । विषय इति । विषयो ग्राह्यो विज्ञानाद्बहिरिति यावत् अत एव सामान्यं साधारणं घटादिवत् अनेकपुरुषैर्गृहीतमिति यावत् विज्ञानाकारत्वे त्वसाधारण्याद्विज्ञानानां वृत्तिरू- २
पाणां तेऽप्यसाधारणाः स्युः विज्ञानं यथा परेण न गृह्यते परबुद्धेरप्रत्यक्षत्वादित्यभिप्रायः । तथाच नर्तकीभ्रूलताभङ्गे एकस्मिन् बहूनां प्रतिसन्धानं युक्तम् अन्यथा न स्यादिति भावः । अचेतनं । सर्व्व एव प्रधानबुद्ध्यादयोऽचेतनाः न वैनाशिकवच्चैतन्यं बुद्धेरित्यर्थः । प्रसवधर्म्मि । प्रसवरूपो धर्मो यः सोऽस्यास्तीति प्रसवधर्म्मि प्रसवधर्म्मेति वक्तव्ये मत्वर्थीयः प्रसवधर्म्मस्य नित्ययोगमाख्यातुम् सरूपविरूपपरिणामाभ्यां न कदाचिदपि वियुज्यत इत्यर्थः । व्यक्तवृत्तमव्यक्तेऽतिदिशति । तथा प्रधानम् । यथा व्यक्तं तथा प्रधानं ताभ्यां वैधर्म्म्यं पुरुषस्याह । तद्विपरीतः पुमान् । तथाहि अहेतुमत्त्वानित्यत्वादि

प्र[illegible]मस्ति पुरुषस्य एवमनेकत्वं व्यक्तसाधर्म्यं तत्कथमुच्यते तद्विपरीतः पुमानित्यत आह। तथा चेति। [illegible] यद्यप्यहेतुमत्वादि साधर्म्यं तथाप्यत्रैगुण्यादि वैपरीत्यमस्त्येवेत्यर्थः॥ ११॥

[illegible]त्युक्तं तत्र के ते त्रयो गुणाः किञ्च तदुपलक्षितमित्यत आह।

**प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः।**
**अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः॥ १२॥**

[illegible]इति परार्थाः सत्त्वं लघु प्रकाशकमित्यत्र च सत्त्वादयः क्रमेण निर्देक्ष्यन्ते। तदनागतावेक्षणेन तन्त्रयुक्त्या वा प्रीत्यादीन् यथासंख्यं वेदितव्यम्। एतदुक्तं भवति प्रीतिः सुखं प्रीत्यात्मकः सत्त्वगुणः अप्रीतिर्दुःखं अप्रीत्यात्मको रजोगुणः विषादो मोहः विषादात्मकस्तमोगुण इति। ये तु मन्यन्ते न प्रीतिर्दुःखाभावादतिरिच्यते एवं दुःखमपि न प्रीत्यभावादन्यदिति तान् प्रत्यात्मग्रहणम्। नेतरेतराभावाः सुखादयः अपि तु भावाः आत्मशब्दस्य भाववचनत्वात् प्रीतिरात्मा भावो येषां ते प्रीत्यात्मानः। एवमन्यदपि व्याख्येयम्। भावरूपता चैषामनुभवसिद्धा परस्पराभावात्मकत्वे तु परस्पराश्रयापत्तेरेकस्याप्यसिद्धेरुभयासिद्धिरिति भावः। स्वरूपमेषामुक्त्वा प्रयोजनमाह। प्रकाशप्रवृत्तिनियमार्थाः। अत्रापि यथासंख्यमेव। रजः प्रवर्त्तकत्वात्सर्वत्र लघु सत्त्वं प्रवर्त्तयेत् यदि तमसा गुरुणा न नियम्येत। तमोनियतन्तु क्वचिदेव प्रवर्त्तयतीति भवति तमो नियमार्थम्। प्रयोजनमुक्त्वा क्रियामाह। अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च। वृत्तिः क्रिया सा च प्रत्येकमभिसम्बध्यते। अन्योन्याभिभववृत्तयः एषामन्यतमेनार्थवशादुद्भूतेनान्यदभिभूयते। तथाहि सत्त्वं रजस्तमसी अभिभूय शान्तामात्मनो वृत्तिं प्रतिलभते एवं रजः सत्त्व

तमसी अभिभूय घोराम् एवं तमः सत्त्वरजसी अभिभूय मूढामिति । [illegible] यद्यप्याधाराधेयभावेन नाश्रयार्थो घटते तथापि यदपेक्षया यस्य क्रिया स तस्याश्रयः [illegible] सत्त्वं प्रवृत्तिनियमावाश्रित्य रजस्तमसोः प्रकाशेनोपकरोति [illegible] प्रकाशनियमावाश्रित्य प्रवृत्त्येतरयोः तमः प्रकाशप्रवृत्ती आश्रित्य नियमेनेतरयोरिति । [illegible] । अन्यतमोऽन्यतमं जनयति जननञ्च परिणामः स च गुणानां सदृशरूपः अत एव न हेतुमत्त्वं तत्त्वान्तरस्य हेतोरभावात् । नाप्यनित्यत्वं तत्त्वान्तरे लयाभावात् । [illegible] । अन्योन्यसहचराः अविनाभाववृत्तय इति यावत् चः समुच्चये भवति चात्रागमः ‘ अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्र गामिनः । रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः । तमसश्चापि मिथुने ते सत्त्वरजसी उभे । उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते । नैषामादिः संप्रयोगो वियोगो वोपलभ्यत इति ॥ १२ ॥

प्रकाशप्रवृत्तिनियमार्था इत्युक्तम् । तत्र के ते इत्थम्भूताः कुतश्चेत्यत आह ।

**सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः । गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥ १३ ॥**

सत्त्वमेव लघु प्रकाशकमिष्टं सांख्याचार्य्यैः तत्र कार्य्योद्गमने हेतुर्धर्मो लाघवं गौरवप्रतिद्वन्द्वि यतोऽग्नेरूर्द्ध्वज्वलनं भवति तदेव लाघवं कस्यचित्तिर्य्यग्गमनहेतुर्यथा वायोः । एवं करणानां वृत्तिपटुत्वहेतुर्लाघवं गुरुत्वे हि मन्दानि स्युरिति सत्त्वस्य प्रकाशकत्वमुक्तं सत्त्वतमसी स्वयमक्रियतया स्वकार्य्यप्रवृत्तिं प्रत्यवसीदन्ती रजसोपष्टभ्येते अवसादात् प्रच्याव्य स्वकार्य्ये उत्साहं प्रयत्नं कार्य्येते ’ तदिदमुक्तमुपष्टम्भकं रज इति । कस्मादित्यत उक्तं चलमिति । तदनेन र-

जातः प्रवृत्त्यर्थत्वं दर्शितम्। रजस्तु चलतया परितस्त्रैगुण्यं चलयद्गुरुणावृण्वता च तमसा तत्र तत्र प्रवृत्तिप्रतिबन्धेन क्वचिदेव प्रवर्त्त्यत इति ततस्ततो व्यावृत्त्या तमो नियामकमुक्तं गुरु वरणकमेव तम इति। एवकारः प्रत्येकं भिन्नक्रमः सम्बध्यते सत्त्वमेव रज एव तम एव। ननु चैते परस्परविरोधशीला गुणाः सुन्दोपसुन्दवत्परस्परं ध्वंसन्त इत्येव युक्तं प्रागेव तेषामेकक्रियाकारितेति अत आह। प्रदीपवच्चार्थतो वृत्तिः। दृष्टमेतत् यथा वर्त्तितैले अनलविरोधिनी अथ च मिलिते सहानलेन रूपप्रकाशलक्षणं कार्य्यं कुरुतः यथा च वातपित्तश्लेष्माणः परस्परविरोधिनः शरीरधारणलक्षणकार्य्यकारिणः एवं सत्त्वरजस्तमांसि मिथोविरुद्धान्यपि अनुवर्त्स्यन्ति स्वकार्य्यं करिष्यन्ति च। अर्थतः पुरुषार्थत इति यावत्। यथा च वक्ष्यति 'पुरुषार्थ एव हेतुर्न केनचित् कार्य्यते करणम्' इति। अत्र च सुखदुःखमोहाः परस्परविरोधिनः स्वस्वानुरूपाणि सुखदुःखमोहात्मकान्येव निमित्तानि कल्पयन्ति। तेषाञ्च परस्परमभिभाव्याभिभावकभावान्नानात्वम्। तद्यथा एकैव स्त्री रूपयौवनकुलशीलसम्पन्ना स्वामिनं सुखाकरोति तत्कस्य हेतोः स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात्। सैव स्त्री सपत्नीर्दुःखाकरोति तत्कस्य हेतोः ताः प्रति तस्या दुःखरूपसमुद्भवात्। एवं पुरुषान्तरं तामविन्दमानं सैव मोहयति तत्कस्य हेतोः तत् प्रति तस्या मोहरूपसमुद्भवात्। अनया च स्त्रिया सर्व्वे भावा व्याख्याताः। तत्र यत्सुखहेतुस्तत्सुखात्मकं सत्त्वं यद् दुःखहेतुस्तद्दुःखात्मकं रजः यन्मोहहेतुस्तन्मोहात्मकं तमः। सुखप्रकाशलाघवानां त्वेकस्मिन् युगपदुद्भूतावविरोधः सह दर्शनात्। तस्मात् सुखदुःखमोहैरिव विरोधिभिरविरोधिभिरेकैकगुणवृत्तिभिः सुखप्रकाशलाघवैर्न निमित्तभेदा उन्नीयन्ते एवं दुःखोपष्टम्भकप्रवर्त्तकत्वैरेवं मोहगुरुत्वावरणैरिति

द्धं त्रैगुण्यमिति ॥ ॥

अनुभूयमानेषु पृथिव्यादिषु अनुभवसिद्धा भवन्त्व-
वेकित्वादयः, ये पुनः सत्त्वादयो नानुभवपथमधिरोहन्ति तेषां कु-
त्वमविवेकित्वं विषयत्वं सामान्यत्वमचेतनत्वं प्रसवधर्म्मित्वं चेत्यत
ाह ।

अविवेकयादेः सिद्धिस्त्रैगुण्यात्तद्विपर्ययाभावात् ।
कारणगुणात्मकत्वात्कार्य्यस्याव्यक्तमपि सिद्धम् ॥ ॥

अविवेकित्वमविवेकि यथा द्व्येकयोर्द्विवचनैकवचने इत्यत्र द्वित्वै-
त्वयोरिति अन्यथा द्व्येकेष्विति स्यात् । कुतः पुनरविवेकित्वादि-
द्धिरित्यत आह त्रैगुण्यात् यद्यत्सुखदुःखमोहात्मकं तदविवेक्यादि-
गि यथेदमनुभूयमानं व्यक्तमिति स्फुटत्वादन्वयेनोक्तम् । व्यति-
रमाह तद्विपर्ययाभावात् अविवेक्यादिविपर्य्यये पुरुषे त्रैगुण्याभावा-
अथवा व्यक्ताव्यक्ते पक्षीकृत्य अन्वयाभावेन त्रैगुण्यादित्यवीतएव
ुर्वक्तव्यः । स्यादेतत् अव्यक्तसिद्धौ सत्यां तस्या विवेक्यादयो
र्माः सिध्यन्ति अव्यक्तमेवत्वद्यापि न सिद्ध्यति तत्कथमविवेक्यादि-
द्धिरित्यतआह कारणगुणात्मकत्वात्कार्य्यस्याव्यक्तमपि सिद्धम् ।
ग्रमभिसन्धिः । कार्य्यं हि कारणगुणात्मकं दृष्टम् । यथा तन्त्वादि-
गात्मकं पटादि तथा महदादिलक्षणेनापि कार्य्येण सुखदुःखमो-
रूपेण स्वकारणमतसुखदुःखमोहात्मना भवितव्यं, तथाच तत्कारणं
खदुःखमोहात्मकं प्रधानमव्यक्तं सिद्धं भवति ॥ १४ ॥

स्यादेतत् व्यक्ताद्व्यक्तमुत्पद्यते इति कणभक्षाक्षचरणतनयाः प-
ाणवो हि व्यक्तास्तैर्द्व्यणुकादिक्रमेण पृथिव्यादिलक्षणकार्य्यं व्यक्त-
रभ्यते पृथिव्यादिषु च कारणगुणक्रमेण रूपाद्युत्पत्तिः तस्माद्व्य-

कारणगता न अस्या अव्यक्तत्वादन्या । नहि सत्कार्य्यपक्षे कार्य्यस्याव्यक्ततायाः अन्यस्यां शक्तावस्ति प्रमाणम् । अयमेव हि सिकताभ्यस्तिलानां तैलोपादानानां भेदो यदेतेष्वेव तैलमस्त्यनागतावस्थं न सिकतास्विति । स्यादेतत् शक्तितः प्रवृत्तिः कारणकार्य्यविभागाविभागौ च महत एव परमाव्यक्तत्वं साधयिष्यत इति कृतं ततः परेणाव्यक्तेनेत्यत आह परिमाणात् परिमितत्वादव्यापित्वादिति यावत् । विवादाध्यासिता महदादिभेदा अव्यक्तकारणवन्तः परिमितत्वाद्घटादिवत् । घटादयो हि परिमिता मृदाद्यव्यक्तकारणका दृष्टाः । उक्तमेतद्यथा कार्य्यस्याव्यक्तावस्था कारणमिति । यच्च महतः कारणं तत्परमव्यक्तं ततः परतराव्यक्तकल्पनायां प्रमाणाभावात् । इतश्च विवादाध्यासिता भेदा अव्यक्तकारणवन्तः समन्वयात् । भिन्नानां समानरूपता समन्वयः । सुखदुःखमोहसमन्विता हि बुद्ध्यादयोऽध्यवसायादिलक्षणाः प्रतीयन्ते । यानि च यद्रूपसमनुगतानि तानि तत्स्वभावाव्यक्तकारणकानि यथा मृद्धेमपिण्डसमनुगता घटमुकुटादयो मृद्धेमपिण्डाव्यक्तकारणका इति कारणमस्त्यव्यक्तं भेदानामिति सिद्धम् ॥ १५ ॥

अव्यक्तं साधयित्वा अस्य प्रवृत्तिप्रकारमाह ।

**कारणमस्त्यव्यक्तं प्रवर्तते त्रिगुणतः समुदयाच्च ।**
**परिणामतः सलिलवत् प्रतिप्रतिगुणाश्रयविशेषात् ॥ १६ ॥**

प्रतिसर्गावस्थायां सत्त्वञ्च रजश्च तमश्च सदृशपरिणामानि भवन्ति । परिणामस्वभावा हि गुणा नापरिणम्य क्षणमप्यवतिष्ठन्ते । तस्मात्सत्त्वं सत्त्वरूपतया रजो रजोरूपतया तमस्तमोरूपतया प्रतिसर्गावस्थायामपि प्रवर्तते तदिदमुक्तं त्रिगुणत इति । प्रवृत्त्यन्तरमाह समुदयाच्च समेत्योदयः समुदयः समवायः स च गुणानां न गुणप्र-

ध्यस्थं सुखी हि सुखेन तृप्यन् दुःखी हि दुःखं द्विषन् मध्यस्थो-
भवति तदुभयरहितस्तु मध्यस्थ उदासीन इति चाख्यायते वि-
वेकित्वादप्रसवधर्मित्वा[illegible] सिद्धम् ॥ १९ ॥

स्यादेतत् । प्रमा[illegible]र्तव्यमर्थमवगम्य चेतनोऽहं चिकीर्षन्
करोमीति कृतिचैतन्ययोः सामानाधिकरण्यमनुभवसिद्धं तदेतस्मिन्म-
तेनावकल्पते चेतनस्याकर्तृत्वात्कर्तुश्चाचैतन्यादित्यत आह ।

**तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।**
**गुणकर्तृत्वे च तथा कर्तेव भवत्युदासीनः ॥ २० ॥**

यतश्चैतन्यकर्तृत्वे भिन्नाधिकरणे युक्तितः सिद्धे तस्माद्भ्रान्ति-
रियमित्यर्थः । लिङ्गं महदादि सूक्ष्मपर्यन्तं वक्ष्यति [illegible]
तत्संयोगस्तत्सन्निधानमतिरोहितार्थमन्यत् ॥ २० ॥

तत्संयोगादित्युक्तं नच भिन्नयोः संयोगोऽपेक्षां विना न चेय-
मुपकार्य्योपकारकभावं विनेत्यपेक्षाहेतुमुपकारमाह ।

**पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।**
**पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥ २१ ॥**

प्रधानस्येति कर्म्मणि षष्ठी । प्रधानस्य सर्व्वकारणस्य यद्दर्शनं पु-
रुषेण तदनेन भोग्यता प्रधानस्य दर्शिता । ततश्च भोग्यं प्र-
धानं भोक्तारमन्तरेण न सम्भवतीति युक्तास्य भोक्त्रपेक्षा पुरुषस्या-
पेक्षां दर्शयति पुरुषस्य कैवल्यार्थं तथा भोग्येन हि प्रधानेन सम्भि-
न्नः पुरुषस्तद्गतं दुःखत्रयं स्वात्मन्यभिमन्यमानः कैवल्यं प्रार्थयते तच्च
सत्त्वपुरुषान्यताख्यातिनिबन्धनम् । नच सत्त्वपुरुषान्यताख्यातिः प्र-
धानमन्तरेणेति कैवल्यार्थं पुरुषः प्रधानमपेक्षते अनादित्वाच्च सं-
योगपरम्पराया भोगाय संयुक्तोऽपि कैवल्याय पुनः संयुज्यते इति
युक्तम् । ननु भवत्वनयोः संयोगो महदादिसर्गस्तु कुत इत्यत

आह । तत्कृतः सर्गः प्रधानपुरुषयोः [illegible] महदादिसर्गमन्तरेण भोगाय कैवल्याय च पर्याप्तमिति संयोगएव भोगापवर्गार्थं सर्गं करोतीत्यर्थः ॥ २१ ॥

सर्गक्रममाह ।

**प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः ।**
**तस्मादपि षोडशकात्पञ्चभ्यः पञ्च भूतानि ॥ २२ ॥**

प्रकृतिरव्यक्तं महदहङ्कारौ वक्ष्यमाणलक्षणौ एकादशेन्द्रियाणि वक्ष्यमाणानि पञ्च तन्मात्राणि च सोऽयं षोडशसंख्यापरिमितोगणः षोडशकः तस्मादपि षोडशकात्पञ्चभ्यः पञ्चभ्यस्तन्मात्रेभ्यः पञ्च भूतान्याकाशादीनि । तत्र शब्दतन्मात्रादाकाशं शब्दगुणं, शब्दतन्मात्र सहितात् स्पर्शतन्मात्राद्वायुः शब्दस्पर्शगुणः, शब्दस्पर्शतन्मात्रसहिताद्रूपतन्मात्रात्तेजः शब्दस्पर्शरूपगुणं, शब्दस्पर्शरूपतन्मात्रसहिताद्रसतन्मात्रादापः शब्दस्पर्शरूपरसगुणाः, शब्दस्पर्शरूपरसतन्मात्रसहिताद्गन्धतन्मात्राच्छब्दस्पर्शरूपरसगन्धगुणा पृथिवी [illegible]: ॥ २२ ॥

अव्यक्तं सामान्यतोलक्षितं तद्विपरीतमित्यनेन विशेषतश्चसत्त्वं लघु प्रकाशकमित्यादिना व्यक्तमपि सामान्यतोलक्षितं हेतु मदित्यादिना सम्प्रति विवेकज्ञानोपयोगितया व्यक्तविशेषं बुद्धिं लक्षयति ।

**अध्यवसायोबुद्धिर्धर्म्मोज्ञानं विरागऐश्वर्य्यम् ।**
**सात्त्विकमेतद्रूपं तामसमस्माद्विपर्य्यस्तम् ॥ २३ ॥**

अध्यवसायोबुद्धिः क्रियाक्रियावतोरभेदविवक्षया । सर्वोव्यवहर्त्ता आलोच्य मत्वाहमत्राधिकृतइत्याभिमत्य कर्त्तव्यमेतन्मयेत्यध्यवस्यति ततश्च प्रवर्त्तते इति लोकसिद्धम् । तत्र योऽयं कर्त्तव्यमितिविनिश्चयः चितिसन्निधानादापन्नचैतन्यायाबुद्धेः सोऽध्यवसायो बुद्धेरसा

धारणोव्यापारस्तदभेदाद्बुद्धेः । स च बुद्धेर्लक्षणं समाना समानजातीयव्यवच्छेदकत्वात् । तदेवं बुद्धिं लक्षयित्वा विवेकज्ञानोपयोगिनस्तस्या धर्म्मान् सात्त्विक तामसानाह, धर्म्मोज्ञानं विराग ऐश्वर्य्यं सात्त्विकमेतद्रूपं तामसमस्माद्विपर्य्यस्तम् । धर्म्मो ऽभ्युदयनिःश्रेयसहेतुस्तत्र यागदानाद्यनुष्ठानजनितोधर्म्मोऽभ्युदयहेतुः अष्टाङ्गयोगानुष्ठानजनितश्च निःश्रेयसहेतुः । गुणपुरुषान्यताख्यातिर्ज्ञानम् । वैराग्यं रागाभावः तस्य यतमानसंज्ञा व्यतिरेकसंज्ञा एकेन्द्रियसंज्ञा वशीकारसंज्ञेति चतस्रःसंज्ञा । रागादयः कषायाश्चित्तवर्त्तिन स्तैरिन्द्रियाणि यथास्वं विषयेषु प्रवर्त्त्यन्ते तन्मा ऽत्र प्रवार्त्तिषत विषयेष्विन्द्रियाणीति तत्परिपाचनायारम्भः प्रयत्नो यतमानसंज्ञा । परि पाचने चानुष्ठीयमाने केचित्कषायाः पक्काः पक्ष्यन्ते च केचित्तत्रैवं पूर्व्वापरीभावे सति पक्ष्यमाणेभ्यः कषायेभ्यः पक्कानां व्यतिरेकेणावधारणं व्यतिरेकसंज्ञा । इन्द्रियप्रवृत्त्यसमर्थतया पक्कानामौत्सुक्य मात्रेण मनसि व्यवस्थानमेकेन्द्रियसंज्ञा । औत्सुक्यमात्रस्यापि निवृत्तिरुपस्थितेष्वपि दृष्टानुश्रविकविषयेषु या संज्ञात्रयात्पराचीना सा वशीकारसंज्ञा यामत्रभगवान् पतञ्जलिर्वर्णयाञ्चकार दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यमिति । सो ऽयं बुद्धिधर्म्मो विराग इति । ऐश्वर्य्यमपि बुद्धिधर्म्मो यतो ऽणिमादिप्रादुर्भावः । अत्राणिमा भवत्यणुः यतः शिलामपि प्रविशति । लघिमा लघुभावः यतः सूर्य्यमरीचीनालम्ब्य सूर्य्यलोकं याति । महिमा महतोभावः यतोमहान् भवति । प्राप्तिरङ्गुल्यग्रेण स्पृशति चन्द्रमसम् । प्राकाम्य मिच्छानभिघातो यतोभूमावुन्मज्जति निमज्जति यथोदके । वशित्वं भूतभौतिकं वशीभवत्यवश्यम् । ईशित्वं भूतभौतिकानां प्रभवस्थितिव्ययानामीष्टे । यत्र कामावसायित्वं सा सत्यसङ्कल्पता यथास्य

सङ्कल्पोभवति भूतेषु तथैव भूतानि भवन्ति। अन्येषां निश्चया निश्चेतव्यमनुविधीयन्ते योगिनस्तु निश्चेतव्याः पदार्था निश्चयमिति अनन्तचत्वारः सात्त्विका बुद्धिधर्म्माः। तामसास्तु तद्विपरीताबुद्धिधर्म्माः अधर्म्माज्ञानवैराग्यानैश्वर्य्याभिधानाश्चत्वारइत्यर्थः॥ २३॥

अहङ्कारस्य लक्षणमाह।

**अभिमानोऽहङ्कारस्तस्माद् द्विविधः प्रवर्त्तते सर्गः।**
**एकादशकश्च गणस्तन्मात्रपञ्चकश्चैव॥ २४॥**

अभिमानोऽहङ्कारः यत् खल्वालोचितं मतञ्च तत्राहमधिकृतः शक्तः खल्वहमत्र मदर्था एवामी विषयाः मत्तोनान्योऽत्राधिकृतः कश्चिदस्त्यतोऽहमस्मीति यो ऽभिमानः सोऽसाधारणव्यापारत्वादहङ्कारस्तमुपजीव्य हि बुद्धिरध्यवस्यति कर्त्तव्यमेतन्मयेति। तस्य कार्य्य भेदमाह, तस्माद् द्विविधः प्रवर्त्तते सर्गः। प्रकारद्वयमाह। एकादशकश्च गणः इन्द्रियाह्वयः तन्मात्रपञ्चकश्चैव। द्विविधएव सर्गो ऽहङ्कारात् नत्वन्यइत्येवकारेणावधारयति॥ २४॥

स्यादेतत् अहङ्कारादेकरूपात्कारणात्कथं जडप्रकाशकौ गणौ विलक्षणौ भवत इत्यत आह।

**सात्त्विकएकादशकः प्रवर्त्तते वैकृतादहङ्कारात्। सात्त्विकात्**
**भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम्॥ २५॥**

प्रकाशलाघवाभ्यामेकादशकइन्द्रियगणः सात्त्विकोवैकृतात्सात्त्विकादहङ्कारात् प्रवर्त्तते। भूतादेस्तामसादहङ्कारात्तन्मात्रोगणः प्रवर्त्तते कस्माद् यतः स तामसः। एतदुक्तं भवति यद्यप्येकोऽहङ्कार स्तथापि गुणभेदोद्भवाभिभवाभ्यां भिन्नं कार्य्यं करोतीति। ननु यदि सत्वतमोभ्यामेव सर्व्वं कार्य्यं जन्यते तदा कृतमकिञ्चित्करेण रजसेत्यत आह, तैजसादुभयम् तैजसाद्राजसादुभयं गणद्वयं भवति। यद्य-

पि रजस्तेन कार्य्यान्तरमस्ति तथापि सत्त्वतमसी स्वयमक्रिये समर्थे अपि न स्वकार्य्यं कुरुतः रजस्तु चलतया ते यदा चालयति तदा स्वकार्य्यं कुरुतइति तदुभयस्मिन्नपि कार्य्ये सत्त्वतमसोः क्रियोत्पादनद्वारेणास्ति रजसः कारणत्वमिति न व्यर्थं रजइति ॥ २५ ॥

सात्विकमेकादशकमाख्यातुं बाह्येन्द्रियदशकं तावदाह ।

**बुद्धीन्द्रियाणि चक्षुःश्रोत्रघ्राणरसनत्वगाख्यानि ।**
**वाक्पाणिपादपायूपस्थानि कर्म्मेन्द्रियाण्याहुः ॥ २६ ॥**

सात्विकाहङ्कारोपादानत्वमिन्द्रियत्वं तच्च द्विविधं बुद्धीन्द्रियं कर्म्मेन्द्रियञ्च उभयमप्येतदिन्द्रस्यात्मनश्चिन्हत्वादिन्द्रियमुच्यते । तानि च स्वसंज्ञाभिश्चक्षुरादिभिरुक्तानि तत्र रूपग्रहणलिङ्गं चक्षुः शब्दग्रहणलिङ्गं श्रोत्रं गन्धग्रहणलिङ्गं घ्राणं रसग्रहणलिङ्गं रसनं स्पर्शग्रहणलिङ्गं त्वक् । एवं वागादीनां कार्य्यं वक्ष्यति ॥ २६ ॥

एकादशकमिन्द्रियमाह ।

**उभयात्मकमत्र मनः सङ्कल्पकमिन्द्रियञ्च साधर्म्यात् ।**
**गुणपरिणामविशेषान्नानात्वं बाह्यभेदाश्च ॥ २७ ॥**

एकादशस्विन्द्रियेषु मध्ये मनउभयात्मकं बुद्धीन्द्रियं कर्म्मेन्द्रियं च । चक्षुरादीनां मनोऽधिष्ठितानामेव स्वस्वविषयेषु प्रवृत्तेः । तदसाधारणेन रूपेण लक्षयति, सङ्कल्पकमत्र मनः, सङ्कल्पेन रूपेण मनो लक्ष्यते आलोचितमिन्द्रियेण वस्त्विदमिति सम्मुग्धमिदमेवं नैवमिति सम्यक् कल्पयति विशेषणविशेष्यभावेन विवेचयतीति यावत् । [redacted] । तथाहि, अस्ति ह्यालोचनज्ञानं प्रथमं निर्विकल्पकम् । बालमूकादिविज्ञानसदृशं मुग्धवस्तुजमिति । ततः परं पुनर्वस्तुधर्म्मैर्जात्यादिभिर्यया । बुद्ध्यावसीयते साहि

पत्यक्षः

प्रत्यक्षत्वेनसम्मता। सोऽयं सङ्कल्पलक्षणो व्यापारो मनसः समानासमानजातीयाभ्यां व्यवच्छिन्दन् मनो लक्षयति । स्यादेतत् । असाधारणव्यापारं योगिनौ यथा महदहङ्कारौ नेन्द्रियमेवं मनोऽप्यसाधारणव्यापारयोगि नेन्द्रियं भवितुमर्हतीत्यत आह । इन्द्रियञ्च कुतः साधर्म्यात् इन्द्रियान्तरैः, सात्त्विकाहङ्कारोपादानत्वञ्च साधर्म्यं नत्विन्द्रलिङ्गत्वं त्वादीनामप्यात्मलिङ्गत्वेनेन्द्रियत्वप्रसङ्गात्, तस्माद्व्युत्पत्तिमात्रमिन्द्रलिङ्गत्वं नतु प्रवृत्तिनिमित्तम् । अथ कथं सात्त्विकाहङ्कारादेकस्मादेकादशेन्द्रियाणीत्यतआह, गुणपरिणामविशेषान्नानात्वं वाह्यभेदाश्च । शब्दाद्युपभोगसम्प्रवर्त्तकादृष्टसहकारिभेदात्कार्य्यभेदाः । अदृष्टभेदोऽपि गुणपरिणामएव वाह्यभेदाश्चेति दृष्टान्तार्थं यथा वाह्यभेदास्तथैतदपीत्यर्थः ॥ २७ ॥ एकादशेन्द्रियम्

तदेवमेकादशेन्द्रियाणि स्वरूपत उक्त्वा दशानामसाधारणीर्वृत्तीराह ।

**शब्दादिषु पञ्चानामालोचनमात्रमिष्यते वृत्तिः ।**
**वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानाम् ॥ २८ ॥**

बुद्धीन्द्रियाणां सम्मुग्धवस्तुमात्रदर्शनमालोचनमुक्तं कर्म्मेन्द्रियाणां कण्ठताल्वादिस्थानमिन्द्रियं वाक् तस्या वृत्तिर्वचनं स्पष्टमन्यत् ॥ २८ ॥

अन्तःकरणत्रयस्य वृत्तिमाह ।

**स्वालक्षण्यं वृत्तिस्त्रयस्य सैषा भवत्यसामान्या ।**
**सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ॥ २९ ॥**

स्वालक्षण्यं वृत्तिस्त्रयस्य स्वमसाधारणं लक्षणं येषां तानि स्वलक्षणानि महदहङ्कारमनांसि तेषां भावः स्वालक्षण्यं तच्च स्वानिलक्षणान्येव । तद्यथा । महतोऽध्यवसायोऽहङ्कारस्याभिमानः सङ्क-

ल्पो मनसो वृत्तिर्व्यापारः । वृत्तिद्वैविध्यं साधारणासाधारणत्वाभ्यामाह । सैषा भवत्यसामान्या असाधारणी । सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च । सामान्या चासौ करणवृत्तिश्चेति त्रयाणामपि करणानां पञ्च वायवः जीवनं वृत्तिः तद्भावे भावात् तदभावे चाभावात् । तत्र प्राणो नासाग्रहृन्नाभिपादाङ्गुष्ठवृत्तिः । अपानः कृकाटिकापृष्ठपादपायूपस्थपार्श्ववृत्तिः । समानो हृन्नाभिसर्वसन्धिवृत्तिः । उदानो हृत्कण्ठतालुमूर्द्धभ्रूमध्यवृत्तिः । व्यानस्त्वग्वृत्तिरिति पञ्च वायवः ॥ २९ ॥

अस्यासाधारणीषु वृत्तिषु क्रमाक्रमौ सप्रकारावाह ।

**युगपच्चतुष्टयस्य तु वृत्तिः क्रमशश्च तस्य निर्दिष्टा ।**

**दृष्टे तथाप्यदृष्टे त्रयस्य तत्पूर्विका वृत्तिः ॥ ३० ॥**

यदा सन्तमसान्धकारे विद्युत्सम्पातमात्राद्व्याघ्रमभिमुखमतिसन्निहितं पश्यति तदा खल्वस्यालोचनसङ्कल्पाभिमानाध्यवसाया युगपदेव प्रादुर्भवन्ति । यतस्तत उत्प्लुत्य तत्स्थानादेकपदेऽपसरति क्रमशश्च यदा मन्दालोके प्रथमं तावद्वस्तुमात्रं सम्मुग्धमालोचयति अथ प्रणिहितमनाः कर्णान्ताकृष्टसशरशिञ्जिनीमण्डलीकृतकोदण्डः प्रचण्डतरः पाटच्चरोऽयमिति निश्चिनोति, अथ च मां प्रत्येतीत्यभिमन्यते अथाध्यवस्यति अपसरामीतः स्थानादिति । परोक्षे तु अन्तःकरणत्रयस्य बाह्येन्द्रियवर्जं वृत्तिरित्याह अदृष्टे त्रयस्य तत्पूर्विका वृत्तिः । अन्तःकरणत्रयस्य युगपत् क्रमेण च वृत्तिर्दृष्टपूर्विकेति । अनुमानागमस्मृतयो हि परोक्षेऽर्थे दर्शनपूर्वाः प्रवर्त्तन्ते नान्यथा । यथा दृष्टे तथा अदृष्टेऽपीति योजना ॥ ३० ॥

स्यादेतत् चतुर्णां त्रयाणां वा वृत्तयो न तावत्तन्मात्राधीनाः तेषां सदातनत्वेन वृत्तीनां सदोत्पादप्रसङ्गात् आकस्मिकत्वे तु वृत्ति

सङ्करप्रसङ्गो नियमहेतोरभावादित्यत आह ।

**स्वां स्वां प्रतिपद्यन्ते परस्पराकूतहेतुकां वृत्तिम् ।** प्रबोध्यते
**पुरुषार्थ एव हेतुर्न केनचित्कार्य्यते करणम् ॥ ३१ ॥**

करणानीति शेषः । यथाहि बहवः पुरुषाः शाक्तीकयाष्टीकधानुष्ककार्प्याणिकाः कृतसङ्केताः परावस्कन्दाय प्रवृत्ताः तत्रान्यतमस्याकूतमवगम्यान्यतमः प्रवर्त्तते प्रवर्त्तमानश्च शाक्तीकः शक्तिमेवादत्ते न तु यष्ट्यादिकमेवं याष्टीकोऽपि यष्टिमेव न शक्त्यादिकं तथान्यतमस्य करणस्याकूतात्स्वकार्यकरणाभिमुख्यादन्यतमं करणं प्रवर्त्तते । तत्प्रवृत्तेश्च हेतुमत्त्वान्न वृत्तिसङ्कर इत्युक्तं स्वां स्वां प्रतिपद्यन्ते इति । स्यादेतत् याष्टीकादयश्चेतनत्वात् परस्पराकूतमवगम्य प्रवर्त्तन्ते इति युक्तं करणानि त्वचेतनानि तस्मान्नैवं प्रवर्त्तितुमुत्सहन्ते तेनैषामधिष्ठात्रा करणानां स्वरूपसामर्थ्योपयोगाभिज्ञेन भवितव्यमत आह । पुरुषार्थ एव हेतुर्न केनचित्कार्य्यते करणम् । भोगापवर्गलक्षणः पुरुषार्थ एवानागतावस्थः प्रवर्त्तयति करणानि कृतमत्र तत्स्वरूपाभिज्ञेन कर्त्रा । एतच्च वत्सविवृद्धिनिमित्तमित्यत्रोपपादयिष्यते ॥ ३१ ॥

न केनचित्कार्य्यते करणमित्युक्तं तत्र करणं विभजते ।

**करणं त्रयोदशविधं तदाहरणधारणप्रकाशकरम् ।**
**कार्य्यञ्च तस्य दशधा हार्य्यं धार्य्यं प्रकाश्यञ्च ॥ ३२ ॥**

करणं त्रयोदशविधमिन्द्रियाण्येकादश बुद्धिरहङ्कारश्चेति त्रयोदशप्रकारं करणं कारकविशेषः करणम् । न च व्यापारावेशं विना कारकत्वमिति व्यापारमाह, तदिति । यथायथं तत्र कर्म्मेन्द्रियाणि वागादीन्याहरन्ति यथास्वमुपाददते स्वव्यापारेण प्राप्नुवन्तीति यावत् बुद्ध्यहङ्कारमनांसि तु स्ववृत्त्या प्राणादिलक्षणया धारयन्ति बुद्धीन्द्रियाणि प्रकाशयन्ति । आहरणधारणादिक्रियाणां सकर्म्मकतया कि

कर्म्म कतिविधञ्चेत्यत आह । कार्य्यञ्च तस्येति । तस्य त्रयोदशविधस्य करणस्य दशधा आहार्य्यं धार्य्यं प्रकाश्यञ्च । आहार्य्यं व्याप्यं कर्मेन्द्रियाणां वचनादानविहरणोत्सर्गानन्दा यथायथं व्याप्याः ते च यथायथं दिव्यादिव्यतया दश इत्याहार्य्यं दशधा । एवं धार्य्यमप्यन्तःकरणत्रयस्य प्राणादिलक्षणया वृत्त्या शरीरं तच्च पार्थिवादि पाञ्च भौतिकं शब्दादीनां पञ्चानां समूहः पृथिवी । ते च पञ्च दिव्यादिव्यतया दशेति धार्य्यमपि दशधा । एवं बुद्धीन्द्रियाणां शब्दस्पर्शरूपरसगन्धा यथायथं व्याप्याः ते च यथायथं दिव्यादिव्यतया दशेति प्रकाश्यमपि दशधेति ॥ ३२ ॥

त्रयोदशविधकरणेऽवान्तरविभागं करोति ।

**अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम् ।**
**साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम् ॥ ३३ ॥**

अन्तःकरणं त्रिविधं बुद्धिरहङ्कारो मन इति शरीराभ्यन्तरवर्त्तित्वादन्तःकरणम् । दशधा बाह्यमिन्द्रियं त्रयस्यान्तःकरणस्य विषयाख्यं विषयमाख्याति विषयसङ्कल्पाभिमानाध्यवसायेषु कर्त्तव्येषु द्वारीभवति तत्र बुद्धीन्द्रियाण्यालोचनेन कर्म्मेन्द्रियाणि तु यथास्वं व्यापारेण । बाह्यान्तरयोः करणयोर्विशेषान्तरमाह । साम्प्रत कालं बाह्यं त्रिकालमाभ्यन्तरं करणम् । साम्प्रतकालं वर्त्तमानकालं बाह्यमिन्द्रियं वर्त्तमानसमीपमनागतमतीतमपि वर्त्तमानं अतो वागपि वर्त्तमानकालविषया भवति । त्रिकालमाभ्यन्तरंकरणं तद्यथा नदीपूरभेदादभूद्वृष्टिः अस्ति धूमादग्निरिह नागनिकुञ्जे असत्युपघातके पिपीलिकाण्डसञ्चरणाद्भविष्यति वृष्टिरिति तदनुरूपाश्च सङ्कल्पाभिमानाध्यवसाया भवन्ति । कालश्च वैशेषिकाभिमत एको नानागतादिव्यवहारभेदं प्रवर्त्तयितुमर्हतीति । तस्मादयं यैरुपाधिभेदैरनागतादिभेदं प्रपद्यते स-

न्तु तएवोपाधयोऽनागतादिव्यवहारहेतवः कृतमन्तर्गडुना कालेनेति सांख्याचार्य्याःतस्मान्न कालरूपतत्त्वान्तराभ्युपगमइति ॥३३॥

साम्प्रतकालानां बाह्येन्द्रियाणां विषयं विवेचयति ।

**बुद्धीन्द्रियाणि तेषां पञ्च विशेषाविशेषविषयाणि ।**

**वाग्भवति शब्दविषया शेषाणि तु पञ्च विषयाणि ॥३४॥**

बुद्धीन्द्रियाणि तेषां दशानामिन्द्रियाणां मध्ये पञ्च विशेषाविशेषविषयाणि विशेषाःस्थूलाः शब्दादयः शान्तघोरमूढाःपृथिव्यादिरूपाः। अविशेषास्तन्मात्राणि सूक्ष्माः शब्दादयः मात्रग्रहणेन स्थूल भूतमपाकरोति विशेषाश्चाविशेषाश्च विशेषाविशेषा स्तएव विषया येषां बुद्धीन्द्रियाणां तानि तथोक्तानि । तत्रोर्द्ध्वस्रोतसां योगिनाञ्च श्रोत्रं शब्दतन्मात्रविषयं स्थूलशब्दविषयञ्च अस्मदादीनान्तु स्थूल शब्दविषयमेव । एवं तेषां त्वक् स्थूलसूक्ष्मस्पर्शविषया अस्मदादीनान्तु स्थूलस्पर्शविषयैव । एवं चक्षुरादयोऽपि तेषामस्मदादीनाञ्च रूपादिषु स्थूलसूक्ष्मेषु द्रष्टव्याः एवं कर्म्मेन्द्रियेषु मध्ये वाग्भवति शब्दविषया स्थूलशब्दविषया तद्धेतुत्वात् नतु शब्दतन्मात्रस्य हेतुः तस्याहङ्कारिकत्वेन वागिन्द्रियेण सहैककारणकत्वात् । शेषाणि तु चत्वारि पायूपस्थपाणिपादाख्यानि पञ्चविषयानि पाण्याद्याहार्य्याणां घटादीनां पञ्चशब्दाद्यात्मकत्वादिति ॥ ३४ ॥

साम्प्रतं त्रयोदशसु करणेषु केषाञ्चित् गुणभावं केषाञ्चित् प्रधानभावं सहेतुकमाह ।

**सान्तःकरणा बुद्धिः सर्व्वं विषयमवगाहते यस्मात् ।**

**तस्मात्त्रिविधं करणं द्वारिद्वाराणि शेषाणि ॥ ३५ ॥**

द्वारि प्रधानं, शेषाणि करणानि बाह्येन्द्रियाणि द्वाराणि तैरुपनीतं सर्व्वं विषयं समनोहङ्कारा बुद्धिर्यस्मादवगाहतेऽध्यवस्यति तस्मा-

द्वारेन्द्रियाणि द्वाराणि द्वारवती च सान्तःकरणा बुद्धिरिति ॥३५॥

न केवलं बाह्येन्द्रियाण्यपेक्ष्य प्रधानं बुद्धिरपितु ये अप्यहङ्कारमनसी द्वारिणी ते अप्यपेक्ष्य बुद्धिः प्रधानमित्याह ।

**एते प्रदीपकल्पाः परस्परविलक्षणा गुणविशेषाः ।**
**कृत्स्नं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्ति ॥ ३६ ॥**

यथाहि ग्रामाध्यक्षाः कौटुम्बिकेभ्यः करमादाय विषयाध्यक्षाय प्रयच्छन्ति विषयाध्यक्षश्च सर्वाध्यक्षाय स च भूपतये तथा बाह्येन्द्रियाण्यालोच्य मनसे समर्पयन्ति, मनश्च सङ्कल्प्याहङ्काराय, अहङ्कारश्चाभिमत्य बुद्धौ सर्वाध्यक्षभूतायां तदिदमुक्तं पुरुषस्यार्थं प्रकाश्य बुद्धौ प्रयच्छन्तीति । बाह्येन्द्रियमनोहङ्काराश्च गुणविशेषाः गुणानां सत्त्वरजस्तमसां विकाराः ते तु परस्परविरोधशीला अपि पुरुषार्थेन भोगापवर्गरूपेण एकवाक्यतां नीताः यथा वर्त्तितैलवह्नयः सन्तमसापनयेन रूपप्रकाशाय मिलिताः प्रदीपः एवमेते गुणविशेषा इति योजना ॥ ३६ ॥

कस्मात्पुनर्बुद्धौ प्रयच्छन्ति ननु बुद्धिरहङ्काराय द्वारिणे मनसे वेत्यत आह ।

**सर्वं प्रत्युपभोगं यस्मात्पुरुषस्य साधयति बुद्धिः ।**
**सैव च विशिनष्टि पुनः प्रधानपुरुषान्तरं सूक्ष्मम् ॥ ३७ ॥**

पुरुषार्थस्य प्रयोजकत्वात्तस्य यत्साधनं तत् प्रधानं बुद्धिश्चास्य साक्षात्साधनं तस्मात्सैव प्रधानम् । यथा सर्वाध्यक्षः साक्षाद्राजार्थसाधनतया प्रधानम् इतरे तु ग्रामाध्यक्षादयस्तं प्रति गुणभूताः । बुद्धिर्हि पुरुषसन्निधानात्तच्छायापत्त्या तद्रूपेव सर्वविषयोपभोगं पुरुषस्य साधयति सुखदुःखानुभवो हि भोगः स च बुद्धौ बुद्धिश्च पुरुषरूपेवेति । सा च पुरुषमुपभोजयति । यथालोचनसङ्कल्पाभिमानाश्च

तत्तद्रूपपरिणामेन बुद्धावुपसंक्रान्ताः, तथा इन्द्रियादिव्यापारा अपि बुद्धेरेव स्वव्यापारेण अध्यवसायेन सह व्यापारीभवन्ति यथा स्वसैन्येन सह ग्रामाध्यक्षादिसैन्यं सर्वाध्यक्षस्य भवति। सर्वं शब्दादिकं प्रति य उपभोगः पुरुषस्य तं साधयति। ननु पुरुषस्य सर्वविषयोपभोगसम्पादिका बुद्धिरनिर्मोक्ष इत्यत आह। प्रधानपुरुषयोरन्तरं विशेषं विशिनष्टि करोति। ननु प्रधानपुरुषयोरन्तरस्य कृतकत्वादनित्यत्वं तत्कृतस्य मोक्षस्य स्यादित्यत आह। विशिनष्टि प्रधानं सविकारमन्यदहमन्य इति विद्यमानमेवान्तरमविवेकेनाविद्यमानमिव बुद्धिं बोधयति येनानित्यत्वमित्यर्थः। यथौदनपाकं पचतीति करणं च प्रतिपादनमनेनापवर्गः पुरुषार्थो दर्शितः। सूक्ष्ममिति दुर्लक्ष्यं तदन्तरम् ॥ ३७ ॥

तदेवं करणानि विभज्य विशेषाविशेषान् विभजते।

**तन्मात्राण्यविशेषास्तेभ्यो भूतानि पञ्च पञ्चभ्यः।**

**एते स्मृता विशेषाः शान्ता घोराश्च मूढाश्च ॥ ३८ ॥**

शब्दादितन्मात्राणि सूक्ष्माणि न चैषां शान्तत्वादिरस्ति उपभोगयोग्यो विशेषइति मात्रशब्दार्थः। अविशेषानुक्त्वा विशेषान् वक्तुमुत्पत्तिमेषामाह। तेभ्योभूतानि तेभ्यस्तन्मात्रेभ्यः यथासंख्यमेकद्वित्रिचतुःपञ्चभ्यो भूतानि आकाशानिलानलसलिलावनिरूपाणि पञ्च पञ्चभ्यस्तन्मात्रेभ्यः अस्त्वेषां भूतानामुत्पत्तिर्विशेषत्वे किमायातमित्यत आह। एते स्मृता विशेषाः, कुतः शान्ताघोराश्च च एको हेतौ द्वितीयः समुच्चये यस्मादाकाशादिषु स्थूलेषु सत्त्वप्रधानतया केचिच्छान्ताः सुखाः प्रसन्ना लघवः केचिद्रजःप्रधानतया घोरा दुःखा अनवस्थिताः केचित्तमः प्रधानतया मूढा विषण्णा गुरवः। तेऽमी परस्परस्या अनुभूयमाना विशेषाइतिस्थूलाइति चोच्यन्ते तन्मात्रा-

णि तु अस्मदादिभिः परस्परव्यावृत्तानि नानुभूयन्त इत्यविशेषाइति सूक्ष्माइति चोच्यन्ते ॥ ३८ ॥

विशेषाणामवान्तरविशेषमाह ।

**सूक्ष्मा मातापितृजाः सहप्रभूतैस्त्रिधा विशेषाः स्युः ।**
**सूक्ष्मास्तेषां नियता मातापितृजा निवर्त्तन्ते ॥ ३९ ॥**

त्रिधा विशेषाः स्युः तान् विशेषानाह, सूक्ष्माः सूक्ष्मदेहाः परिकल्पिताः मातापितृजाः षाट्कौशिकाः । तत्र मातृतो लोमलोहितमांसानि पितृतस्तु स्नाय्वस्थिमज्जान इति षट्कोशाः प्रकृष्टानि महान्ति भूतानि प्रभूतानि तैः सह सूक्ष्मशरीरमेकोविशेषः मातापितृजो द्वितीयो महाभूतानि तृतीयो महाभूतसर्गे च घटादीनां निवेश इति । सूक्ष्ममातापितृजयोर्देहयोर्विशेषमाह, सूक्ष्मास्तेषां विशेषाणां मध्ये ये ते नियताः । मातापितृजा निवर्त्तन्ते रसान्ता वा भस्मान्ता वा विडन्तावेति ॥ ३९ ॥

सूक्ष्मशरीरं विभजते ।

**पूर्व्वोत्पन्नमसक्तं नियतं महदादिसूक्ष्मपर्य्यन्तम् ।**
**संसरति निरुपभोगं भावैरधिवासितं लिङ्गम् ॥ ४० ॥**

प्रधानेनादिसर्गे प्रतिपुरुषमेकैकमुत्पादितम् असक्तमव्याहतं शिलामप्यनुविशति नियतम् आ चादिसर्गादा च महाप्रलयादवतिष्ठते । महदादिसूक्ष्मपर्य्यन्तं महदहङ्कारैकादशेन्द्रियपञ्चतन्मात्रपर्य्यन्तम् एषां समुदायः सूक्ष्मशरीरं शान्तघोरमूढैरिन्द्रियैरन्वितत्वाद्विशेषः । नन्वस्त्वेतदेव शरीरं भोगायतनं पुरुषस्य कृतं दृश्यमानेन षाट्कौशिकेन शरीरेणेत्यतआह । संसरतीति । उपात्तमुपात्तं षाट्कौशिकं शरीरं जहाति हायं हायं चोपादत्ते कस्मान्निरुपभोगं यतः षाट्कौशिकं शरीरं विना सूक्ष्म शरीरं निरुपभोगं यस्मात्तस्मात्संसरति । न-

धर्मनिमित्तः संसारः न च सूक्ष्मशरीरस्यास्ति तद्योगस्तत्कथं सरतीत्यत आह, भावैरधिवासितं धर्म्माधर्म्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि भावास्तदन्विता बुद्धिः तदन्वितंच सूक्ष्मशरीरमिति तदपि भावैरधिवासितं यथा सुरभिचम्पकसम्पर्काद्वस्त्रं तदामोदवासितम्भवति। तस्माद्भावैरधिवासितत्वात्संसरति। कस्मात्पुनः प्रधानमिव महाप्रलयेऽपि तच्छरीरं न तिष्ठतीत्यत आह। लिङ्गमिति। लयं गच्छतीति लिङ्गम्। सहेतुकत्वेन चास्य लिङ्गत्वमितिभावः ॥४०॥

स्यादेतत्। बुद्धिरेव साहङ्कारेन्द्रिया कस्मान्न संसरति कृतं सूक्ष्मशरीरेणाप्रामाणिकेनेत्यत आह।

**चित्रं यथाश्रयमृते स्थाण्वादिभ्यो विना यथाच्छाया।**
**तद्वद्विना विशेषैर्न तिष्ठति निराश्रयं लिङ्गम् ॥ ४१ ॥**

लिङ्गनात् ज्ञापनात् बुद्ध्यादयो लिङ्गं तदनाश्रितं न तिष्ठति। जन्मप्रयाणान्तराले बुद्ध्यादयः प्रत्युत्पन्नशरीराश्रिताः, प्रत्युत्पन्नपञ्चतन्मात्रत्वे सति बुद्ध्यादित्वात्, दृश्यमानशरीरवृत्तिबुद्ध्यादिवत्। विना विशेषैरिति, सूक्ष्मैः शरीरैरित्यर्थः। आगमश्चात्र भवति। ततः सत्यवतः कायात्पाशबद्धं वशं गतम्। अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलादिति। अङ्गुष्ठमात्रत्वेन सूक्ष्मतामुपलक्षयति। आत्मनो-निष्कर्षासम्भवेन सूक्ष्ममेव शरीरं पुरुषस्तदपि हि पुरि स्थूलशरीरे शेते ॥ ४१ ॥

एवंसूक्ष्मशरीरास्तित्वमुपपाद्य यथा संसरति येन च हेतुना तदुभयमाह।

**पुरुषार्थहेतुकमिदं निमित्तनैमित्तिकप्रसङ्गेन।**
**प्रकृतेर्विभुत्वयोगान्नटवद्व्यवतिष्ठते लिङ्गम् ॥ ४२ ॥**

पुरुषार्थेन हेतुना प्रयुक्तं निमित्तं धर्म्माधर्म्मादि नैमित्तिकं तेषु

तेषु निकायेषु यथायथं षाट्कौशिकशरीरग्रहः स हि धर्म्मादिनिमित्तभवः निमित्तञ्च नैमित्तिकञ्च तत्र यः प्रसङ्गः प्रसक्तिस्तया नटवद्व्यवतिष्ठते लिङ्गं सूक्ष्मशरीरम् । यथाहि नटस्तां तां भूमिकां विधाय परशुरामो वा अजातशत्रुर्वा वत्सराजो वा भवति, एवं तत्तत्स्थूलशरीरग्रहणात् देवो वा मनुष्यो वा पशुर्वा वनस्पतिर्वा भवति सूक्ष्मं शरीरमित्यर्थः । कुतस्त्यः पुनरस्येदृशो महिमेत्यत आह । प्रकृतेर्विभुत्वयोगात् तथाच पुराणम् । वैश्वरूप्यात् प्रधानस्य परिणामोऽयमद्भुत इति ॥४२॥

निमित्तनैमित्तिकप्रसङ्गेनेत्युक्तं तत्र निमित्तं नैमित्तिकञ्च विभजते ।

**सांसिद्धिकाश्च भावाः प्राकृतिका वैकृताश्च धर्म्माद्याः ।**

**दृष्टाः करणाश्रयिणः कार्य्याश्रयिणश्च कललाद्याः ॥४३॥**

वैकृतिका नैमित्तिकाः प्राकृतिकाः सांसिद्धिका भावाः स्वाभाविका इति यावत् । तथाहि, सर्गादावादिविद्वान् भगवान् कपिलो महामुनिर्धर्मज्ञानवैराग्यैश्वर्यसम्पन्नः प्रादुर्बभूवेति स्मरन्ति । वैकृताश्च भावाः असांसिद्धिकाः उपायानुष्ठानोत्पन्नाः यथा प्राचेतसप्रभृतीनां महर्षीणाम् । एवमधर्म्माज्ञानावैराग्यानैश्वर्य्याण्यपि । कार्य्यं शरीरं तदाश्रयिणस्तस्यावस्थाः कललबुद्बुदमांसपेशीकरण्डाद्यङ्गप्रत्यङ्गव्यूहाः गर्भस्थस्य ततो निर्गतस्य बालस्य बाल्यकौमारयौवनवार्द्धकानीति ॥४३॥

अवगतानि निमित्तनैमित्तिकानि कतमस्य तु निमित्तस्य कतमन्नैमित्तिकमित्यत आह ।

**धर्म्मेण गमनमूर्द्ध्वं गमनमधस्ताद्भवत्यधर्म्मेण ।**

**ज्ञानेन चापवर्गो विपर्य्ययादिष्यते बन्धः ॥ ४४ ॥**

धर्म्मेण गमनमूर्द्ध्वं द्युप्रभृतिषु लोकेषु गमनमधस्ताद्भवत्यधर्म्मेण सुतलादिषु ज्ञानेन चापवर्गः । तावदेव प्रकृतिरारभते न यावद्विवे-

कख्यातिं करोति, अथ विवेकख्यातौ सत्यां कृतकृत्यतया विवेक-
ख्यातिमन्तं पुरुषं प्रति निवर्त्तते । यदाहुः । विवेकख्यातिपर्य्यन्तं या-
ति प्रकृतिर्विकृतिमयीति । विपर्ययादतत्त्वज्ञानादिष्यते बन्धः । तच्च त्रि-
विधः प्राकृतिको वैकृतिको दाक्षिणिकश्चेति तत्र प्रकृतावात्मज्ञानात् प्रकृ-
तिमुपासते तेषां प्राकृतिकोबन्धः । यः पुराणे प्रकृतिलयान् प्रत्युच्यते ।
पूर्णं शतसहस्रन्तु तिष्ठन्त्यव्यक्तचिन्तकाइति । वैकारिकोबन्धस्तेषां
येविकारानेव भूतेन्द्रियाहङ्कारबुद्धीः पुरुषबुद्ध्योपासते तान् प्रतीद-
मुच्यते । दश मन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः । भौतिकास्तु शतं
पूर्णं सहस्रन्त्वाभिमानिकाः । बौद्धा दशसहस्राणि तिष्ठन्ति विगत-
ज्वराः । ते खल्वमी विदेहा येषां वैकृतिकोबन्धइति । इष्टापूर्त्तेन
दाक्षिणः पुरुषतत्त्वानभिज्ञो हि इष्टापूर्त्तकारी कामोपहतमना बध्यत-
इति ॥ ४४ ॥

**वैराग्यात्प्रकृतिलयः संसारो भवति राजसाद्रागात् ।**
**ऐश्वर्य्यादविघातो विपर्ययात्तद्विपर्यासः ॥ ४५ ॥**

वैराग्यात्प्रकृतिलयः पुरुषतत्त्वानभिज्ञस्य वैराग्यमात्रात्प्रकृतिलयः
प्रकृतिग्रहणात् 'प्रकृतिमहदहङ्कारभूतेन्द्रियाणि गृह्यन्ते तेष्वात्मबु-
द्ध्या उपास्यमानेषु लयः । कालान्तरेण च पुनराविर्भवन्तीति । संसा-
रोभवति राजसाद्रागात्, राजसादित्यनेन रजसोदुःखत्वात्संसारस्य
दुःखहेतुता सूचिता । ऐश्वर्य्यादविघातः इच्छायाः ईश्वरो हि यदि-
च्छति तत्करोति । विपर्य्ययादनैश्वर्य्यात् तद्विपर्यासः सर्व्वत्रेच्छा-
विघातइत्यर्थः ॥ ४५ ॥

बुद्धिधर्म्मान् धर्मादीनष्टौ भावान् समासव्यासाभ्यां मुमुक्षूणां हे-
योपादेयान् दर्शयितुं प्रथमतस्तावत्समासमाह ।

**एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टिसिद्ध्याख्यः ।**

**गुणवैषम्यविमर्दात्तस्य च भेदास्तु पञ्चाशत् ॥ ४६ ॥**

एष इति प्रतीयतेऽनेनेति प्रत्ययो बुद्धिस्तस्य सर्गः तत्र विपर्ययोऽज्ञानमविद्या बुद्धिधर्म्मः अशक्तिरपि करणवैकल्यहेतुका बुद्धिधर्म्म एव तुष्टिसिद्धी अपि वक्ष्यमाणे बुद्धिधर्म्मावेव । तत्र विपर्ययाशक्तितुष्टिषु यथायोगं सप्तानां धर्म्मादीनां ज्ञानवर्जमन्तर्भावः सिद्धौ च ज्ञानस्येति । व्यासमाह, तस्य च भेदास्तु पञ्चाशत् कस्माद्गुणवैषम्यविमर्दात् । गुणानां वैषम्यमेकैकस्याधिकबलता द्वयोर्द्वयोर्वा । एकैकस्य न्यूनबलता द्वयोर्द्वयोर्वा । तेन न्यूनाधिक्ये मन्दमध्यातिमात्रतया यथाकार्यमुन्नीयेते । तदिदं गुणानां वैषम्यं तेनोपमर्दः एकैकस्य न्यूनबलस्य द्वयोर्वाभिभवः तस्मात्तस्य भेदाः पञ्चाशदिति ॥ ४६ ॥

तानेव पञ्चाशद्भेदान् गणयति ।

**पञ्च विपर्ययभेदा भवन्त्यशक्तिश्च करणवैकल्यात् ।**
**अष्टाविंशतिभेदास्तुष्टिर्नवधाष्टधा सिद्धिः ॥ ४७ ॥**

अविद्यास्मितारागद्वेषाभिनिवेशाः यथासंख्यं तमोमोहमहामोहतामिस्रान्धतामिस्रसंज्ञकाः पञ्च विपर्ययविशेषा विपर्ययभवानामस्मितादीनां विपर्ययस्वभावत्वात् । यद्वा यदविद्यया विपर्ययेणावधार्यते वस्तु अस्मितादयस्तत्स्वभावाः सन्तस्तदभिनिविशन्ते । अतएव पञ्चपर्व्वा अविद्येत्याह, भगवान् वार्षगण्यः ॥ ४७ ॥

सम्प्रति पञ्चानां विपर्ययभेदानामवान्तरभेदमाह ।

**भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः ।**
**तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्रः ॥ ४८ ॥**

भेदस्तमसोऽविद्याया अष्टविधः अष्टस्वव्यक्तमहदहङ्कारपञ्चतन्मात्रेषु अनात्मस्वात्मबुद्धिरविद्या तमः । अष्टविधविषयत्वात्तस्याष्ट-

वैधत्वं मोहस्य च। अत्राप्यष्टविधोभेदइति चेनानुषज्यते। देवाह्यष्टविधमैश्वर्य्यमासाद्यामृतत्वाभिमानिनोऽणिमादिकमात्मीयं शाश्वतिकमभिमन्यन्ते इति सोयमस्मितामोहोऽष्टविधैश्वर्यविषयत्वादष्टविधः। दशविधोमहामोहः शब्दादिषु पञ्चसु दिव्यादिव्यतयादशविधेषु विषयेषु रञ्जनीयेषु राग आसक्तिर्महामोहः स च दशविधविषयत्वाद्दशविधः। तामिस्त्राद्विषोऽष्टादशधा। शब्दादयो दशविषयारञ्जनीयाः स्वरूपतः, ऐश्वर्य्यं त्वणिमादिकं न स्वरूपतोरञ्जनीयं किन्तु रञ्जनीयशब्दाद्युपायाः ते च शब्दादयउपस्थिताः परस्परेणोपहन्यमानास्तदुपायाश्चाणिमादयः स्वरूपेणैव कोपनीयाभवन्तीति शब्दादिभिर्दशभिः सहाणिमाद्यष्टकमष्टादशधेति तद्विषयोद्वेषस्तामिस्रोऽष्टादशविषयत्वादष्टादशधेति। तथा भवत्यन्धतामिस्रः अभिनिवेशोन्धतामिस्रः, तथेत्यनेनाष्टादशधेत्यनुषज्यते। देवाः खल्वणिमादिकमष्टविधमैश्वर्य्यमासाद्य दश शब्दादीन् भुञ्जानाः मास्म शब्दादयोभोग्यास्तदुपायाश्चाणिमादयो ऽस्माकमसुरादिभिरुपघानिषतेति बिभ्यति। तदिदं भयमभिनिवेशोऽन्धतामिस्रोऽष्टादशविषयत्वादष्टादशधेति। सोऽयं पञ्चविधोविपर्ययोऽवान्तरभेदाद् द्वाषष्टिरिति ॥ ४८ ॥

तदेवं पञ्च विपर्ययभेदानुक्त्वा अष्टाविंशतिभेदामशक्तिमाह।

**एकादशेन्द्रियवधाः सह बुद्धिवधैरशक्तिरुद्दिष्टा ।**
**सप्तदश बधा बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम् ॥ ४९ ॥**

इन्द्रियबधस्य ग्रहोबुद्धिबधहेतुत्वेन नत्वशक्तिभेदपूर्णत्वेन। एकादशेन्द्रियबधाः। बाधिर्यं कुष्ठितान्धत्वं जड़ता जिघ्रता तथा। मूकता कौण्यपङ्गुत्वक्लैब्योदावर्त्तमन्दताः। यथासंख्यं श्रोत्रादीनामिन्द्रिया-

स्मृताः इति

णां बधाः एतावत्येव तु तद्धेतुका बुद्धेरशक्तिः स्वव्यापारे भवति । तथा चैकादशहेतुकत्वादेकादशधा बुद्धेरशक्तिरुच्यते । हेतुहेतुमतो-रभेदविवक्षया च सामानाधिकरण्यम् । तदेवमिन्द्रियवधद्वारेण बुद्धेरशक्तिमुक्त्वा स्वरूपतोऽशक्तीराह सह बुद्धिबधैरिति । कति बुद्धेः स्वरूपतो बधाइत्यत आह । सप्तदशबधा बुद्धेः, कुतः विपर्ययात्तुष्टिसिद्धीनां तुष्टयो नवधेति तद्विपर्ययास्तन्निरूपणान्नवधा भवन्ति । एवं सिद्धयोऽष्टाविति तद्विपर्ययास्तन्निरूपणाद् अष्टौभवन्तीति ॥ ४९ ॥

तुष्टिर्नवधेत्युक्तं ताः परिगणयति ।

**आध्यात्मिक्यश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः ।**
**बाह्या विषयोपरमात्पञ्च नव तुष्टयोऽभिमताः ॥ ५० ॥**

आध्यात्मिक्यः प्रकृतिव्यतिरिक्तआत्मास्तीति प्रतिपद्य ततोऽस्य श्रवणमननादिना विवेकसाक्षात्काराय त्वसदुपदेशतुष्टो यो न प्रयतते तस्य चतस्रआध्यात्मिक्यस्तुष्टयोभवन्ति । प्रकृतिव्यतिरिक्तमात्मानमधिकृत्य यस्मात्तास्तुष्टयस्तस्मादाध्यात्मिक्यः, कास्ता इत्यत आह । प्रकृत्युपादानकालभाग्याख्याः । प्रकृत्यादिराख्या यासां तास्तथोक्ताः। तत्रप्रकृत्याख्या तुष्टिर्यथा, कस्यचिदुपदेशे विवेकसाक्षात्कारो हि प्रकृतिपरिणामभेदः तञ्च प्रकृतिरेव करोतीति कृतं तद्ध्यानाभ्यासेन तस्मादेवमेवास्तु हे वत्सेति । सेयमुपदेष्टव्यस्य शिष्यस्य प्रकृतौ तुष्टिः प्रकृत्याख्या अम्भउच्यते । या तु प्राकृत्यपि विवेकख्यातिर्न प्रकृतिमात्राद्भवति मा भूत्सर्व्वस्य सर्व्वदा तन्मात्रस्य सर्व्वान् प्रत्यविशेषात्प्रव्रज्यायास्तु सा भवति तस्मात्प्रव्रज्यामुपाददीथाः कृतं तेऽध्यानाभ्यासेनायुष्मन्नित्युपदेशे या तुष्टिः सोपादानाख्या सलिलमुच्यते । या तु प्रव्रज्यापि न सद्योनिर्वाणदेति सैव कालपरिपाकमपेक्ष्य सिद्धिं ते विधास्यति अलमुत्तप्ततया तवेत्युपदेशे या तुष्टिः सा कालाख्या ओ-

घउच्यते । या तु न कालान्नाप्युपादानाद्विवेकख्यातिरपितु भाग्या-
देव अतएव मन्दालसापत्यान्यतिबालानि मातुरुपदेशमात्रादेव विवे-
कख्यातिमन्तिमुक्तानि बभूवुः तत्र भाग्यमेव हेतुर्नान्यदित्युपदेशे-
ना तुष्टिः सा भाग्याख्या वृष्टिरुच्यते । बाह्या दर्शयति । बाह्यास्तुष्ट-
यो विषयोपरमात्पञ्च । याः खल्वनात्मनः प्रकृतिमहदहङ्कारादीना-
मात्मभिन्यमानस्य वैराग्ये सति तुष्टयस्ता बाह्याः । आत्मज्ञानाभावेना-
त्मानमधिकृत्यप्रवृत्तेरिति ताश्च वैराग्ये सति सम्भवन्ति तुष्टयइति वैरा-
ग्यहेतुपञ्चकत्वाद्वैराग्याण्यापि पञ्च तत्पञ्चत्वात् तुष्टयः पञ्चेति ।
उपरम्यतेऽनेनेत्युपरमो वैराग्यम् । विषयादुपरमो विषयोपरमः। विषया
भोग्याः शब्दादयः पञ्च उपरमा अपि पञ्च । तथाहि अर्ज्जनरक्ष-
णक्षयभोगहिंसादोषदर्शजन्मान उपरमाः पञ्च भवन्ति । तथाहि । से-
वादयोधनार्जनोपायास्ते च सेवकादीन् दुःखाकुर्वन्ति । दुष्प्रभुरीश्वर-
द्वाःस्थदण्डिचण्डार्द्धचन्द्रजाम् । वेदनां भावयन् प्राज्ञः कः सेवासु प्रस-
ज्जते । एवमन्ये ऽप्यर्ज्जनोपायादुःखदाइति विषयोपरमे या तुष्टिः सैषा
पार मुच्यते । तथार्जितं धनं राजैकागारिकाग्निजलौघादिभ्योविनंक्ष्य-
तीति तद्रक्षणे महद्दुःखमिति भावयतो विषयोपरमे या तुष्टिः सा द्विति-
या सुपारमुच्यते । तथा महतायासेनार्ज्जितं धनं भुज्यमानं क्षीयते इति
तत्क्षयं भावयतो विषयोपरमे या तुष्टिः सा तृतीया पारापारमुच्यते ।
एवं शब्दादिभोगाभ्यासाद्वर्द्धन्ते कामास्ते च विषयोपरमे या तुष्टिः
सा चतुर्थी अनुत्तमाम्भ उच्यते । एवं नानुपहत्य भूतानि विषयोप-
भोगः सम्भवतीति हिंसादोषदर्शनाद्विषयोपरमे या तुष्टिः सा पञ्च-
मी उत्तमाम्भ उच्यते । एवमाध्यात्मिकीभिश्चतसृभिर्बाह्याभिश्च पञ्च-
भिर्नव तुष्टयोऽभिमताः ॥ ५० ॥

गौणमुख्यभेदाभिन्नाः सिद्धीराह ।

ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ।
दानञ्च सिद्धयोऽष्टौ सिद्धेः पूर्वोऽङ्कुशस्त्रिविधः ॥५१॥

विहन्यमानस्य दुःखस्य त्रित्वात्तद्विघातास्त्रय इति इमा मुख्याः तिस्रः सिद्धयस्तदुपायतया त्वितरा गौण्यः पञ्च सिद्धयः तास्ता अपि हेतुहेतुमत्तया व्यवस्थिताः, अध्ययनलक्षणा सिद्धिर्हेतुरेव मुख्या स्तु सिद्धयोहेतुमत्यएव मध्यमास्तु हेतुहेतुमत्यः विधिवद्गुरुमुखादध्यात्मविद्यानामक्षरस्वरूपग्रहणमध्ययनं प्रथमा सिद्धिस्तारमुच्यते । तत्कार्य्यम् शब्दः शब्द इति शब्दज्ञानजनितमर्थज्ञानमुपलक्षयति, कार्ये कारणोपचारात् । सा द्वितीया सिद्धिः सुतारमुच्यते । तदिदं द्विधा श्रवणं ऊहस्तर्कः आगमाविरोधिन्यायेभागमार्थपरीक्षणम् । परीक्षणञ्च संशयपूर्वपक्षनिराकरणेनोत्तरपक्षव्यवस्थापनं, तदिदं मननमाचक्षते आगमिनः । सा तृतीया सिद्धिस्तारतारमुच्यते । सुहृत्प्राप्तिर्न्यायेन हि स्वयं परीक्षितमप्यर्थमश्रद्दधते न यावद्गुरुशिष्यसब्रह्मचारिभिः सहसंवाद्यते अतः सुहृदां गुरुशिष्यसब्रह्मचारिणां संवादकानां प्राप्तिः सा सिद्धिश्चतुर्थी रम्यकमुच्यते । दानञ्च शुद्धिर्विवेकज्ञानस्य दैप् शोधने इत्यस्माद्धातोर्दानपदव्युत्पत्तेः । यथाह भगवान् पतञ्जलिः, विवेकख्यातिरविप्लवा हानोपाय इति । आविप्लवः शुद्धिः, सा च सवासनसंशयविपर्य्यासानां परिहारेण विवेकसाक्षात्कारस्य स्वच्छप्रवाहेऽवस्थानम् । सा च न विनादरनैरन्तर्य्यदीर्घकालसेविताभ्यासपरिपाकाद्भवतीति दानेनविवेकख्यात्या कार्य्येण सोऽपि संगृहीतः । सेयं पञ्चमी सिद्धिः सदा मुदितमुच्यते । तिस्रश्च मुख्याः सिद्धयः प्रमोदमुदितमोदमाना इत्यष्टौ सिद्धयः । अन्ये व्याचक्षते विनोपदेशादिना प्राग्भवीयाभ्यासवशात्तत्त्वस्य स्वयमूहनं यत्सा सिद्धिरूहः । यस्य सांख्यशास्त्रपाठमन्यदी-

माकर्ण्य तावज्ज्ञानमुत्पद्यते सा सिद्धिः शब्दः पाठादनन्तरं भावात् ।
स्य शिष्याचार्य्यसंवादेन सांख्यशास्त्रं ग्रन्थतोऽर्थतश्चाधीत्य ज्ञान-
त्पद्यते साध्ययनहेतुका सिद्धिरध्ययनं सुहृत्प्राप्तिरिति यस्याधिगततत्त्वं
हृदं प्राप्य ज्ञानमुत्पद्यते सा ज्ञानलक्षणा सिद्धिस्तस्य सुहृत्प्राप्तिः ।
ानञ्च सिद्धिहेतुः धनादिदानेनाराधितो ज्ञानी ज्ञानं प्रयच्छति ।
स्य च युक्तायुक्तत्वे सूरिभिरेवावगन्तव्ये'इति कृतं परदोषोद्भावनेन
ाः सिद्धान्तमात्रव्याख्यानप्रवृत्तानामिति । सिद्धितुष्टिविपर्य्ययेणाऽश-
क्तेर्बुद्धिबधः सप्तदशधा द्रष्टव्यः । अत्र प्रत्ययसर्गे सिद्धिरुपादेयेति
ासिद्ध मेव तन्निवारणहेतवस्तु विपर्य्ययाशक्तितुष्टयो हेयाः इत्याह, सि-
ः पूर्वोऽङ्कुशस्त्रिविधः। पूर्व इति विपर्ययाशक्तितुष्टिः परामृशति
ाः सिद्धिकरिणीनामङ्कुशो निवारकत्वात् अतः सिद्धिपरिपन्थित्वा-
द्विपर्यया शक्तितुष्टयो हेया इत्यर्थः अङ्कुश इति ॥ ५१ ॥

स्यादेतत्। पुरुषार्थप्रयुक्ता सृष्टिः स च पुरुषार्थः प्रत्ययसर्गाद्वा
न्मात्रसर्गाद्वा सिध्यतीति कृतमुभयसर्गेणेत्यत आह ।

**न विना भावैर्लिङ्गं न विना लिङ्गेन भावनिर्वृत्तिः ।**
**लिङ्गाख्यो भावाख्यस्तस्माद्द्विविधः प्रवर्त्तते सर्गः ॥५२॥**

लिङ्गमिति तन्मात्रसर्गमुपलक्षयति भावैरिति च प्रत्ययसर्गम् ।
एतदुक्तं भवति। तन्मात्रसर्गस्य पुरुषार्थसाधनत्वं स्वरूपञ्च न प्रत्य-
यसर्गाद्विना भवति एवं प्रत्ययसर्गस्य स्वरूपं पुरुषार्थसाधनत्वञ्च न
तन्मात्रसर्गाद्दते इत्युभयथा सर्गप्रवृत्तिः । भोगः पुरुषार्थो न भोग्या-
न् शब्दादीन् भोगायतनञ्च शरीरद्वयमन्तरेण सम्भवतीति उपप-
न्नस्तन्मात्रसर्गः । एवं स एव भोगो भोगसाधनानीन्द्रियाणि चान्तः-
करणानि चान्तरेण न सम्भवति, न च तानि धर्म्मादीन् भावान्
विना सम्भवन्ति, न चापवर्गहेतुर्विवेकख्यातिरुभयसर्गं विनेत्युपपन्न

उभयविधः सर्गः । अनादित्वाच्च बीजाङ्कुरवन्नान्योन्याश्रयदोषमावहति कल्पादावपि प्राचीनकल्पोत्पन्नभावलिङ्गसंस्कारवशाद्भावलिङ्ग्योरुत्पत्तिर्नानुपपन्नेति सर्व्वमवदातम् ॥ ५२ ॥

विभक्तः प्रत्ययसर्गः भूतादिसर्गं विभजते ।

**अष्टविकल्पो दैवस्तैर्य्यग्योनश्च पञ्चधा भवति ।**
**मानुष्यश्चैकविधः समासतो भौतिकः सर्गः ॥ ५३ ॥**

ब्राह्मप्राजापत्यैन्द्रपैत्र्यगान्धर्वयाक्षराक्षसपैशाचा इत्यष्टविधो दैवः सर्गः । तैर्य्यग्योनश्च पञ्चधा भवति पशुमृगपक्षिसरीसृपस्थावरा इति । मानुष्यश्चैकविधः ब्राह्मणत्वाद्यवान्तरभेदाविवक्षया संस्थानस्य चतुर्व्वर्ण्यविशेषादिति समासतः संक्षेपतो भौतिकः सर्गः । घटादयस्त्वशरीरत्वेऽपि स्थावरा एवेति ॥ ५३ ॥

भौतिकस्यास्य सर्गस्य चैतन्योत्कर्षनिकर्षतारतम्याभ्यामूर्द्ध्वाधोमध्यभावेन त्रैविध्यमाह ।

**ऊर्द्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः ।**
**मध्ये रजोविशालो ब्रह्मादिस्तम्बपर्य्यन्तः ॥ ५४ ॥**

ऊर्द्ध्वं सत्वविशालो द्युप्रभृतिः सत्यान्तो लोकः सत्वबहुलः तमोविशालश्च मूलतः सर्गः पश्वादिः स्थावरान्तः सोऽयं मोहमयत्वात्तमोबहुलः । भूर्लोकस्तु सप्तद्वीपसमुद्रसन्निवेशो मध्ये रजोविशालः धर्म्माधर्म्मानुष्ठानपरत्वाद्दुःखबहुलत्वाच्च । तामिमां लोकसंस्थितिं संक्षिपति ब्रह्मादिस्तम्बपर्य्यन्तः स्तम्बग्रहणेन वृक्षादयः सङ्गृहीताः ॥ ५४ ॥

तदेवं सर्गं दर्शयित्वा तस्यापवर्गसाधनवैराग्योपयोगिनीं दुःखहेतुतामाह ।

**तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः ।**
**लिङ्गस्याविनिवृत्तेस्तस्माद्दुःखं स्वभावेन ॥ ५५ ॥**

तत्र शरीरादौ यद्यपि विविधा विचित्रानन्दभोगभागिनः प्राणभृद्भेदास्तथापि सर्व्वेषां जरामरणकृतं दुःखमविशिष्टं सर्व्वस्य खलु कृमेरपि मरणत्रासोमा न भूवम्भूयासमित्येवमात्मकोऽस्ति । दुःखं भयहेतुरिति मरणं दुःखम् । स्यादेतत् । सुखादयः प्राकृता बुद्धिगुणास्तत्कथमेते चेतनसम्बन्धिनोभवन्तीत्यत आह । पुरुषइति । पुरि लिङ्गे शेते पुरुषः लिङ्गञ्च तत्सम्बन्धीति 'चेतनोऽपि तत्सम्बन्धी भवतीत्यर्थः । कुतः पुनर्लिङ्गसम्बन्धि दुःखं पुरुषस्येत्यत आह । लिङ्गस्याविनिवृत्तेः । पुरुषाद्भेदाग्रहाल्लिङ्गधर्म्मानात्मन्यध्यस्यति पुरुषः । अथवा दुःखप्राप्तावबधिः कथ्यते लिङ्गं यावन्न निवर्त्तते तावदिति ॥ ५५ ॥

उक्तस्य सर्गस्य कारणविप्रतिपत्ती निराकरोति ।

**इत्येष प्रकृतिकृतो महदादिविशेषभूतपर्य्यन्तः ।**
**प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः ॥ ५६ ॥**

आरम्भत इत्यारम्भः सर्गः प्रकृत्यैव कृतो नेश्वरेण न ब्रह्मोपादानो नाप्यकारणः अकारणत्वे ह्यत्यन्तभावोऽत्यन्ताभावो वा भवेत् । न ब्रह्मोपादानश्चितिशक्तेरपरिणामात्, नेश्वराधिष्ठितप्रकृतिकृतो निर्व्यापारस्याधिष्ठातृत्वासम्भवात्, नहि निर्व्यापारस्तक्षा वास्याद्यधि तिष्ठति । ननु प्रकृतिकृतश्चेत्तस्या नित्यायाः प्रवृत्तिशीलाया अनुपरमात्सदैव सर्गः स्यादिति न कश्चिन्मुच्येत इत्यत आह, प्रतिपुरुषविमोक्षार्थं स्वार्थ इव परार्थ आरम्भः यथौदनकाम ओदनाय पाके प्रवृत्त ओदनसिद्धौ निवर्त्तते एवं प्रत्येकं पुरुषान्मोचयितुं प्रवृत्ता प्रकृतिर्यं पुरुषं मोचयति तं प्रति न पुनः प्रवर्त्तते तदिदमाह, स्वार्थ इव, स्वार्थे यथा तथा परार्थे आरम्भ इत्यर्थः ॥ ५६ ॥

स्यादेतत् । स्वार्थं परार्थं वा चेतनः प्रवर्त्तते न च प्रकृतिरचेतनैवं

भवितुमर्हति तस्मादस्ति प्रकृतेरधिष्ठाता चेतनः नच क्षेत्रज्ञाश्च चेतना अपि प्रकृतिमधिष्ठातुमर्हन्ति तेषां प्रकृतिस्वरूपानभिज्ञत्वात् । तस्मादस्ति सर्वार्थदर्शी प्रकृतेरधिष्ठाता स चेश्वर इत्यत आह ।

**वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य ।**
**पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य ॥ ५७ ॥**

दृष्टमचेतनमपि प्रयोजने प्रवर्त्तमानं यथा वत्सविवृद्ध्यर्थं क्षीरमचेतनं प्रवर्त्तते एवं प्रकृतिरचेतनापि पुरुषविमोक्षणाय प्रवर्त्तिष्यते । नच क्षीरप्रवृत्तेरपीश्वराधिष्ठाननिबन्धनत्वेन साध्यत्वान्न साध्येन व्यभिचार इति साम्प्रतं प्रेक्षावत्प्रवृत्तेः स्वार्थकारुण्याभ्यां व्याप्तत्वात्, ते च जगत्सर्गाद्व्यावर्त्तमाने प्रेक्षावत्प्रवृत्तिपूर्व्वकत्वमपि व्यावर्त्तयतः नह्यवाप्तसकलेप्सितस्य भगवतो जगत्सृजतः किमप्यभिलषितं भवति । नापि कारुण्यादस्य सर्गे प्रवृत्तिः, प्राक् सर्गाज्जीवाना मिन्द्रियशरीरविषयानुत्पत्तौ दुःखाभावेन कस्य प्रहाणेच्छाकारुण्यं सर्गोत्तरकालं दुःखिनोऽवलोक्य कारुण्याभ्युपगमे दुरुत्तरमितरेतराश्रयत्वं कारुण्येन सृष्टिः सृष्ट्या च कारुण्यमिति । अपि च करुणया प्रेरित ईश्वरः सुखिन एव जन्तून् सृजेन्न विचित्रान् । कर्म्मवैचित्र्याद्वैचित्र्यमिति चेत् कृतमस्य प्रेक्षावतः कर्म्माधिष्ठानेन तदनधिष्ठानमात्रादेवाचेतनस्यापि कर्म्मणः प्रवृत्त्यनुपपत्तेस्तत्कार्यशरीरेन्द्रियविषयानुत्पत्तौ दुःखानुत्पत्तेरपि सुकरत्वात् । प्रकृतेस्त्वचेतनायाः प्रवृत्तेर्न स्वार्थानुग्रहो न वा कारुण्यं प्रयोजकमिति नोक्त दोषप्रसङ्गावतारः । पारार्थ्यमात्रन्तु प्रयोजनमुपपद्यते तस्मात्सुष्ठूक्तं वत्सविवृद्धिनिमित्तमिति ॥ ५७ ॥

स्वार्थ इवेति दृष्टान्तितं तद्विभजते ।

**औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्त्तते लोकः ।**
**पुरुषस्य विमोक्षार्थं प्रवर्त्तते तद्वदव्यक्तम् ॥ ५८ ॥**

औत्सुक्यमिच्छा सा खल्विष्यमाणप्राप्तौ निवर्त्तते इष्यमाणश्च इष्टलक्षणत्वात् फलस्य । दार्ष्टान्तिके योजयति पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥ ५८ ॥

ननु भवतु पुरुषार्थः प्रकृतेः प्रवर्तकः निवृत्तिस्तु कुतस्त्या प्रकृतेरित्यतआह ।

**रङ्गस्य दर्शयित्वा निवर्त्तते नर्तकी यथा नृत्यात् ।**
**पुरुषस्य तथात्मानं प्रकाश्य विनिवर्त्तते प्रकृतिः ॥ ५९ ॥**

रङ्गस्येति स्थानेन स्थानिनः पारिषदानुपलक्षयति । आत्मानंशब्दादात्मना पुरुषाद्भेदेन च प्रकाश्येत्यर्थः ॥ ५९ ॥

स्यादेतत् । प्रवर्त्ततां प्रकृतिः पुरुषार्थं पुरुषादुपकृतात् प्रकृति र्लप्स्यति कञ्चिदुपकारम् औज्ञासम्पादनाराधितादिवाज्ञापयितुर्भुजिष्या तथा च न परार्थोऽस्या आरम्भइत्यत आह ।

**नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः ।**
**गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकञ्चरति ॥ ६० ॥**

यथा गुणवानप्युपकार्य्यपि भृत्यो निर्गुणे अत एवानुपकारिणि स्वामिनि निष्फलाराधनः एवमियं प्रकृतिस्तपस्विनी गुणवत्युपकारिण्यप्यनुपकारिणि निर्गुणेऽपि पुरुषे व्यर्थपरिश्रमेति पुरुषार्थमेव यतते न स्वार्थमिति सिद्धम् ॥ ६० ॥

स्यादेतत् । नर्त्तकी नृत्यं परिषद्भ्यो दर्शयित्वा निवृत्तापि पुनस्तद्दृष्टकौतूहलात् प्रवर्तते यथा तथा प्रकृतिरपि पुरुषायात्मानं दर्शयित्वा निवृत्तापि पुनः प्रवर्त्स्यतीत्यतआह ।

**प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति ।**
**या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य ॥ ६१ ॥**

सुकुमारतरता अतिपेशलता परपुरुषदर्शनासहिष्णुतेति यावत्

असूर्य्यंपश्या हि कुलवधू अतिमन्दाक्षमन्थरा प्रमादाद्विगलितशिरो-ञ्चला चेदालोक्यते परपुरुषेण तदासौ तथा प्रयतते अप्रमत्ता यथैनां पुरुषान्तराणि न पुनः पश्यन्तीति । एवं प्रकृतिरपि कुलवधूतोऽप्यधिका दृष्टा विवेकेन न पुनर्द्रक्ष्यतइत्यर्थः ।। ६१ ।।

स्यादेतत् । पुरुषश्चेदगुणोऽपरिणामी कथमस्य मोक्षः मुचेर्बन्धन विश्लेषार्थत्वात् । सवासनक्लेशकर्म्माशयानाञ्च बन्धनसंज्ञितानां पुरुषे ऽपरिणामिन्यसम्भवात् । अतएवास्य पुरुषस्य न संसारः प्रेत्यभावापरनामास्ति निष्क्रियत्वात्, तस्मात्पुरुषविमोक्षार्थमिति रिक्तं वच इतीमामाशङ्कामुपसंहारव्याजेनाभ्युपगच्छन्नपाकरोति ।

**तस्मान्न बध्यतेऽद्धा न मुच्यते नापि संसरति कश्चित् ।**
**संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः ॥ ६२ ॥**

अद्धा न कश्चित्पुरुषोबध्यते न कश्चित्संसरति न कश्चिन्मुच्यत इति । प्रकृतिरेव तु नानाश्रया सती बध्यते च संसरति च मुच्यते च बन्धमोक्षसंसाराः पुरुषे उपचर्य्यन्ते । यथा जयपराजयौ भृत्यगतावपि स्वामिन्युपचर्य्येते, तदाश्रयेण भृत्यानां तद्भागित्वात्तत्फलस्य च शोकलाभादेः स्वामिसम्बन्धात् । भोगापवर्गयोश्च प्रकृतिगतयोरपि विवेकाग्रहात् पुरुषसम्बन्ध उपपादित इति सर्व्वं पुष्कलम् ॥ ६२ ॥

नन्ववगतं प्रकृतिगता बन्धसंसारापवर्गाः पुरुष उपचर्य्यन्त इति किंसाधनाः पुनरेते प्रकृतेरित्यत आह ।

**रूपैः सप्तभिरेव तु बध्नात्यात्मानमात्मना प्रकृतिः ।**
**सैव च पुरुषार्थं प्रति विमोचयत्येकरूपेण ॥ ६३ ॥**

तत्त्वज्ञानवर्जं बध्नाति धर्म्मादिभिः सप्तभीरूपैर्भावैरिति पुरुषार्थं प्रति भोगापवर्गं प्रति आत्मनात्मानमेकरूपेण तत्त्वज्ञानेन विवेकख्यात्या विमोचयति पुनर्भोगापवर्गौ न करोतीत्यर्थः ॥ ६३ ॥

अवगतमीदृशं तत्त्वं ततः किमित्यतआह ।

**एवं तत्त्वाभ्यासान्नास्मि न मे नाहमित्यपरिशेषम् ।**
**अविपर्य्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम् ॥ ६४ ॥**

तत्त्वेन विषयेण विषयिज्ञानमुपलक्षयति उक्तरूपप्रकारतत्त्वविषयज्ञानाभ्यासादादरनैरन्तर्य्यदीर्घकालसेवितात्सत्त्वपुरुषान्यतासाक्षात्कारि ज्ञानमुत्पद्यते। यद्विषयश्चाभ्यासस्तद्विषयमेव साक्षात्कारमुपजनयति। तत्त्वविषयश्चाभ्यास इति तत्त्वसाक्षात्कारं जनयति अत उक्तं विशुद्धमिति। कुतोविशुद्धमित्यतआह। अविपर्ययादिति। संशयविपर्य्ययौ हि ज्ञानस्याविशुद्धी तद्रहितं विशुद्धम्। तदिदमुक्तं विपर्यया दिति। नियतमनियततया गृह्णन्. संशयोऽपि विपर्ययः तेनाविपर्य्ययादिति संशयविपर्य्ययाभावो दर्शितः तत्त्वविषयत्वाच्च संशयविपर्य्ययाभावः। स्यादेतत्। उत्पद्यतामीदृशाभ्यासात्तत्त्वज्ञानं, तथाप्यनादिना मिथ्याज्ञानसंस्कारेण मिथ्याज्ञानं जनयितव्यं, तथाच तन्निबन्धनस्य संसारस्यानुच्छेदप्रसङ्ग इत्यत उक्तं केवलमिति। विपर्य्यासेनासम्भिन्नम्। यद्यप्यनादिर्विपर्ययवासना तथापि तत्त्वज्ञानवासनया तत्त्वविषयसाक्षात्कारमादधत्यादिमत्यापि शक्या समुच्छेत्तुं तत्त्वपक्षपातोहि धियां स्वभावः। यथाहुः बाह्या अपि। निरुपद्रवभूतार्थस्वभावस्य विपर्य्ययैः। न बाधोयत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततइति। ज्ञानस्वरूपमुक्तं नास्मि न मे नाहमिति। नास्मीत्यात्मनि क्रियामात्रं निषेधति। यथाहुः। कृभ्वस्तयः क्रियासामान्यवचना इति। तथाचाध्यवसायाभिमानसङ्कल्पालोचनानि चान्तराणि बाह्याश्च सर्व्वे व्यापारा आत्मनि प्रतिषिद्धानि बोद्धव्यानि यतश्चात्मनि व्यापारावेशोनास्त्यतो नाहम्, अहमिति कर्तृपदम् अहं जानाम्यहं जुहोम्यहं ददेऽहं भुञ्जे इति सर्व्वत्र कर्त्तुः परामर्शात्। निष्क्रियत्वे च सर्व्वत्रकर्तृत्वाभावः ततः सुष्ठूक्तं नाहमिति। अतएव न

मे कर्त्ता हि स्वामितां लभते तदभावात्तु कुतोभाविकी स्वामितेत्यर्थः । अथवा नास्मीति पुरुषोऽस्मि न प्रसवधर्म्मा अप्रसवधर्म्मत्वाच्चाकर्तृत्वमाह । नाहमिति, अकर्तृत्वाच्च न स्वामितेत्याह, न मे इति । नन्वेतावत्सु ज्ञातेष्वपि कश्चित्कदाचिदज्ञातोविषयोऽस्ति तदज्ञानञ्च जन्तून् बन्धयिष्यतीत्यत आह, अपरिशेषमिति । नास्ति किञ्चिदस्मिन्परिशिष्टं ज्ञातव्यं यदज्ञानं बन्धयिष्यतीत्यर्थः ॥ ६४ ॥

किं पुनरीदृशेन तत्त्वसाक्षात्कारेण सिध्यतीत्यत आह ।

**तेन निवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्ताम् ।**
**प्रकृतिं पश्यति पुरुषः प्रेक्षकवदवस्थितः स्वच्छः ॥ ६५ ॥**

भोगविवेकसाक्षात्कारौ हि प्रकृतेः प्रसोतव्यौ तौ च प्रसूताविति नास्याः प्रसोतव्यमवशिष्यते यत् प्रसोष्यतइति निवृ[illegible]ा प्रकृतिः । विवेकज्ञानरूपोयोऽर्थस्तस्य वशः सामर्थ्यं तस्मात् । अतत्त्वज्ञानपूर्व्वकाणि खलु धर्म्माधर्म्माज्ञानवैराग्यावैराग्यैश्वर्य्यानैश्वर्याणि वैराग्यमपि केवलतौष्टिकानामतत्त्वज्ञानपूर्व्वकमेव तत्र तत्त्वज्ञानं विरोधित्वेनातत्त्वज्ञानमुच्छिनत्ति कारणनिवृत्त्या च सप्तरूपाणि निवर्त्तन्ते इति सप्तरूपविनिवृत्ता प्रकृतिः । अवस्थित इति, निष्क्रियः, स्वच्छ इति, रजस्तमोवृत्तिकलुषया बुद्ध्या असम्भिन्नः, सात्त्विकया तु बुद्ध्या तदाप्यस्य मनाक् सम्भेदोऽस्त्येव, अन्यथैवम्भूतप्रकृतिदर्शनानुपपत्तेरिति ॥ ६५ ॥

स्यादेतत् । निवृत्तप्रसवामिति न मृष्यामहे संयोगकृतो हि सर्ग इत्युक्तं योग्यता च संयोगः भोक्तृत्वयोग्यता च पुरुषस्य चैतन्यं भोग्यत्वयोग्यता च प्रकृतेर्जडत्वं विषयत्वञ्च नचैतयोरस्ति निवृत्तिः न च करणीयाभावान्निवृत्तिः तज्जातीयस्यान्यस्य करणीयत्वात् पुनः पुनः शब्दाद्युपभोगवदित्यत आह ।

**दृष्टामयेत्युपेक्षक एको दृष्टाहमित्युपरमत्यन्या ।**

**सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥ ६६ ॥**

करोतु नाम पौनःपुन्येन शब्दाद्युपभोगं प्रकृतिरनया विवेकयातिर्न कृतेति, कृतविवेकख्यातिस्तु शब्दाद्युपभोगं न जनयति । विवेकख्यातिनिबन्धनो हि तदुपभोगो निबन्धनाभावेन न तद्भवितुर्हति अङ्कुरइव बीजाभावेन। प्राकृतान् हि सुखदुःखमोहात्मनः ब्दादींस्तदविवेकान्ममैतदित्यभिमन्यमान आत्मा भुञ्जीत । एवं वेकख्यातिमपि प्राकृतीमविवेकादेवात्मा मदर्थेयमिति मन्यते, उत्पन्नवेकख्यातिस्तु तदसंसर्गान्न शब्दादीन् भोक्तुमर्हति नापि विवेकयातिं प्राकृतीं ततो विविक्त आत्मा स्वार्थामभिमन्तुमर्हति पुरुषार्थौ भोगविवेकौ प्रकृत्यारम्भप्रयोजकावित्यपुरुषार्थौ सन्तौ न प्रकृतिं योजयतः तदिदमुक्तं प्रयोजनं नास्ति सर्गस्येति । अत्र प्रयुज्यते र्गे प्रकृतिरनेनेति प्रयोजनं तदपुरुषार्थत्वे नास्तीत्यर्थः ॥ ६६ ॥

स्यादेतत् । उत्पन्नतत्त्वसाक्षात्कारश्चेन्मुक्तश्चेदनन्तरमेव मुक्तस्य तस्य रीरपातः स्यादिति कथमदेहः प्रकृतिं पश्येत् अथ तत्त्वज्ञानेऽपि न यते कर्म्मणामप्रक्षीणत्वात् तेषां कुतः प्रक्षयः भोगादिति चेत् न भोस्तत्त्वज्ञानं न मोक्षसाधनमिति व्यक्ताव्यक्तज्ञविज्ञानजन्मना ज्ञानेनापवर्ग इति रिक्तं वचः । भोगेन चापरिसङ्ख्येयः कर्म्माप्रचयोऽनियतविपाकसमयः क्षेतव्यः ततश्चापवर्गप्राप्तिरसत्यपि रिथमात्रमित्यत आह ।

**सम्यग्ज्ञानाधिगमाद्धर्म्मादीनामकारणप्राप्तौ ।**
**तिष्ठति संस्कारवशाच्चक्रभ्रमिवद्धृतशरीरः ॥ ६७ ॥**

तत्त्वसाक्षात्कारोदयादेवानादिरप्यनियतविपाककालोऽपि कर्म्माप्रचयो दग्धबीजभावतया न जात्याद्युपभोगलक्षणाय फलाय कल्पते। सलिलावसिक्तायां हि बुद्धिभूमौ कर्म्मबीजान्यङ्कुरं प्रसुवते, तत्त्व-

ज्ञाननिदाघनिपीतसकलक्लेशसलिलायामूषरायां कुतः कर्म्मबीजानामङ्कुरप्रसवः। तदिदमुक्तं धर्म्मादीनामकारणप्राप्ताविति, अकारणत्वप्राप्तावित्यस्यायमर्थः। उत्पन्नतत्त्वज्ञानोऽपि च संस्कारवशात्तिष्ठति यथोपरतेऽपि कुलालव्यापारे चक्रं वेगाख्यसंस्कारवशाद्भ्रमंस्तिष्ठति कालपरिपाकवशात्तूपरते संस्कारे निष्क्रियं भवति, शरीरस्थितौ च प्रारब्धपरिपाकौ धर्म्माधर्म्मौ संस्कारः। यथा चानुश्रूयते भोगेन त्वितरे क्षपयित्वाथ सम्पद्यत इति तावदेवास्य चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति। प्रक्षीयमाणाविद्यासंस्कारविशेषश्च संस्कारस्तद्वशात्तत्सामर्थ्याद्धृतशरीरस्तिष्ठति ॥ ६७ ॥

स्यादेतत्, यदि संस्कारविशेषाद्धृतशरीरस्तथापि कदास्य मोक्षो भविष्यतीत्यत आह।

**प्राप्ते शरीरभेदे चरितार्थत्वात्प्रधानविनिवृत्तौ।**
**ऐकान्तिकमात्यन्तिकमुभयं कैवल्यमाप्नोति ॥ ६८ ॥**

अनारब्धविपाकानां तावत्कर्म्माशयानां तत्त्वज्ञानाग्निना बीजभावो दग्धः प्रारब्धविपाकानां तूपभोगेन क्षये सति प्राप्ते शरीरभेदे विनाशे चरितार्थत्वात्कृतप्रयोजनत्वात्प्रधानस्य तं पुरुषं प्रति निवृत्तावैकान्तिकमवश्यम्भावि आत्यन्तिकमविनाशि उभयं कैवल्यं दुःखत्रयविगमं प्राप्नोति पुरुषः ॥ ६८ ॥

प्रमाणेनोपपादितेऽप्यत्यन्तश्रद्धोत्पादनाय परमर्षिपूर्व्वकत्वमाह।

**पुरुषार्थज्ञानमिदं गुह्यम्परमर्षिणा समाख्यातम्।**
**स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानाम् ॥ ६९ ॥**

गुह्यं गुहानिवासि स्थूलधियां दुर्बोधमिति यावत् परमर्षिणा कपिलेन। तामेव श्रद्धामागमिकत्वेन द्रढयति स्थित्युत्पत्तिप्रलयाश्चिन्त्यन्ते यत्र भूतानां यत्र ज्ञाने यदर्थं यथा चर्म्मणि द्वीपिनं हन्तीति

तानां प्राणिनां स्थित्युत्पत्तिप्रलया आगमैश्चिन्त्यन्ते ॥ ६९ ॥

स्यादेतत्, परमर्षिणा साक्षात्कथितं तच्छ्रद्दधीमहि यत्पुनरीश्वरकृष्णेन कथितं तत्र कुतः श्रद्धेत्यत आह ।

**एतत्पवित्रमग्र्यं मुनिरासुरयेऽनुकम्पया प्रददौ ।**
**आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतन्तन्त्रम् ॥ ७० ॥**
**शिष्यपरम्परयागतमीश्वरकृष्णेन चैतदार्याभिः ।**
**सङ्क्षिप्तमार्य्यमतिना सम्यग्विज्ञाय सिद्धान्तम् ॥ ७१ ॥**

एतत्पवित्रं पावनं दुःखत्रयहेतोः पाप्मनः पुनातीति अग्र्यं सर्वेभ्यः पवित्रेभ्योमुख्यं मुनिः कपिलः आसुरयेऽनुकम्पया प्रददौ आसुरिरपि पञ्चशिखाय तेन च बहुधा कृतं तन्त्रम् ॥ ७० ॥

आरात् याता तत्त्वेभ्य इत्यार्य्या आर्य्या मतिर्यस्य सोऽयमार्य्यमतिरिति ॥ ७१ ॥

एतच्च शास्त्रं सकलशास्त्रार्थसूचकत्वात् न तु प्रकरणमित्याह ।

**सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य ।**
**आख्यायिकाविरहिताः परवादविवर्जिताश्चापि ॥ ७२ ॥**

तथा च राजवार्त्तिकम्। प्रधानास्तित्वमेकत्वमर्थवत्त्वमथान्यता। पारार्थ्यञ्च तथानैक्यं वियोगो योग एव च। शेषवृत्तिरकर्तृत्वं मौलिकार्थाः स्मृता दश । विपर्ययः पञ्चविधस्तथोक्ता नव तुष्टयः। करणानामसामर्थ्यमष्टाविंशतिधा मतम् । इति षष्टिः पदार्थानामष्टाभिः सह सिद्धिभिरिति । सेयं षष्टिपदार्थी कथितेति सकलशास्त्रार्थकथनान्नेदं प्रकरणमपितु शास्त्रमेवेदमिति सिद्धम् । एकत्वमर्थवत्त्वं पारार्थ्यञ्च प्रधानमधिकृत्य । अन्यत्वमकर्तृकत्वं बहुत्वञ्चेति पुरुषमधिकृत्य। अस्तित्वं वियोगो योगश्चेत्युभयमधिकृत्य । स्थितिरिति स्थूलसूक्ष्ममधिकृत्य ॥ ७२ ॥

मनांसि कुमुदानीव बोधयन्ती सतां सदा ।
श्रीवाचस्पतिमिश्राणां कृतिः स्तात्तत्त्वकौमुदी ॥

